**अपूपापिहितान् कुम्भान् यांस्ते देवा अधारयन् ।**
**ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥ २५ ॥**

( देवास्ते यानपूपापिहितान् कुम्भानधारयन् ) देवा अग्न्यादयस्ते तुभ्यं यान् पूर्वोक्तान् अपूपापिहितान् कुम्भान् जालान्तर्गतान् शुक्रादिमथान् कोशानधारयन् धारयन्ति ( ते ते स्वधावन्तो मधुमन्तो घृतश्च्युतः सन्तु ) ते ते तुभ्यं स्वधावन्तोऽन्न-वन्तो मधुमन्तो रसवन्तो घृतवन्तः स्नेहवन्तो वृक्षेषु फलरूपेण संसारे सन्तु सन्ती त्यर्थः "रसो वै मधु" ( शत० ६ । ४ । ।३ । २ ) अन्नरसस्नेहपरिणामास्ते कोशाः सन्तीति विज्ञानं प्रकट्यते ॥ १५ ॥

भाषार्थ—( देवास्ते यानपूपापिहितान् ) अग्नि आदि देव तेरे लिये पूर्वोक्त जिन जालान्तर्गत ( कुम्भानधारयन् ) शुक्रादि कोशों को धारण करते हैं ( ते ते ) वे तेरे लिये ( स्वधावन्तः ) अन्न वाले (मधुमन्तः) रस वाले (घृतवन्तः) स्नेह वाले वृक्षों में फलरूपके समान (सन्तु) संसारमें हों ॥ २५ ॥

शिक्षा—शरीरके अन्दर शुक्रादि कोश, अन्न, रस और स्नेहके आहारसे बनते हैं स्वास्थ्यजनक उक्त वस्तुओंके सेवन करनेसे शरीरान्तर्गत शुक्रादि वस्तुओंका स्वास्थ्यजनक परिणाम हो सकता है ॥ २५ ॥

**यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः ।**
**तास्ते सन्तूद्भ्वीः प्रभ्वीस्तास्ते यमो राजानुमन्यताम् ॥ २६ ॥**

(यास्ते तिलमिश्राः स्वधावतीर्धाना अनुकिरामि) हे जीव ! तुभ्यं यास्तिल-मिश्रास्तिलमिव मांसग्रन्थिस्तिलस्तेन मिश्राः सहिताः स्वधावतीः स्वधारणाशक्तिमती र्धाना धारणशीला धमनीरनुकिरामि जाले क्षिपामि तनोमीत्यर्थः । 'ललाटेऽङ्गुष्ठमात्रं चिह्नं तिलं तिलकं वाऽभिधीयते, नेत्रे कृष्णं मध्यचिह्नं नेत्रतिलमुच्यते तदेतादृशमुप-मयैव भवति तथैवात्रापि विज्ञेयम् ( तास्ते उद्भ्वीः प्रभ्वीः सन्तु ) ता धाना धमन्यस्ते तुभ्यमुद्भ्वीरुद्भाविका उत्तानिकाः प्रभ्वीः प्रतानिकाश्च सन्ति (तास्ते यमो राजानुम-न्यताम् ) तास्ते धमनीर्यमो राजा जीवनकालोऽनुमन्यतामनुकूलं नयतु ॥ २६ ॥

भाषार्थ—( यास्ते तिलमिश्राः ) हे जीव ! जो तेरे लिये तिलके समान मांस ग्रन्थियोंसे युक्त ( स्वधावतीर्धानाः ) स्वधारणशक्तिवाली धमनियोंको ( अनुकिरामि ) शरीरजालमें फैलाता हूँ । (तास्ते उद्भ्वीः प्रभ्वीः सन्तु ) उक्त धमनियां तेरे लिये तानें-बानेंके रूपमें विद्यमान हैं (तास्ते यमो राजा) उनको तेरा जीवनकाल (अनुमन्यताम् ) अनुकूलरूपसे जीवनके लिये फैला दे या स्थिर रक्खे ॥ २६ ॥

शिक्षा—शरीरके अन्दर मांसग्रन्थियोंके साथ शिरायें तानें बानेके रूपमें फैली हुई हैं। जो वातादि वाहक होनेसे जीवनकालको स्थिर रखने वाली हैं ॥ २६ ॥

**अक्षितिं भूयसीम् ॥ २७ ॥**

( भूयसीमक्षितिम् ) भूयसीमत्यधिकामक्षितिं जीवनीम्, यमो राजाऽनुमन्यतामिति वर्तते ॥ २७ ॥

भाषार्थ—( भूयसीम् ) अत्यधिक ( अक्षितिम ) जीवनीको जीवनकाल अनुकूलरूपमें स्थिर रखे ॥ २७ ॥

शिक्षा—पूर्वोक्त वातादिवाहक शिराओंके नियमित और उचित सञ्चलन व्यवहारसे जिन्दगी उन्नत होती है ॥ २७ ॥

**द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।**
**समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ २८ ॥**

( द्रप्सः पृथिवीं द्याञ्चानु–इमञ्च योनिमनु चस्कन्द ) द्रप्सो दृप्यतिमुह्यतीति द्रप्सः संसारे मुह्यमानो जीवः "अनीशया शोचति मुह्यमानः" (मुण्डके ३।१।२) मोहनार्थाद्दृप धातोः सः प्रत्ययः। द्यावापृथिवीभ्यां सह तयोरुत्पत्तिसमकालमेव। इमं योनिं मनुष्यादिं योनिमनु शरीरंप्रति चस्कन्द स्कन्दति गच्छति ( यश्च पूर्वः ) यश्च स पूर्वः पुरातनः शाश्वतिकः ( समानं योनिमनुसञ्चरन्तं द्रप्सं सप्तहोत्रा अनु जुहोमि ) समानं कर्मप्रमाणं कर्मानुसारं यथोचितं योनिं शरीरं प्रति सञ्चरन्तं सम्यग् गन्तारं द्रप्सं जीवं सप्त होत्रा अनु सप्तसंख्याका होत्रा यज्ञान् आदानधर्मान् सुषुम्नाकेन्द्ररूपान् प्राणयज्ञान् "होत्रो यज्ञनाम" (नि० ३। १७) जुहोमि प्रयच्छामि संस्थापयामि ॥२८॥

भाषार्थ—( द्रप्सः ) संसारमें मुह्यमान जीव ( पृथिवीं द्याञ्चानु ) द्यावापृथिवीके साथ अर्थात् उनकी उत्पत्तिके समकाल ही ( इमञ्च योनिमनु ) और इस मनुष्य आदियोनि को ( चस्कन्द ) प्राप्त होता है ( यश्चपूर्वः ) जो कि शाश्वतिक अर्थात् नित्य है ( समानं योनिमनु ) कर्मानुसार यथोचित योनिके प्रति ( संचरन्तं द्रप्सम् ) सृष्टिक्रमसे जाते हुए जीवको ( सप्त होत्रा अनु ) सात संख्या वाले यज्ञों अर्थात् सुषुम्ना नाड़ीके सप्त प्राणचक्ररूपी यज्ञोंके साथ ( जुहोमि ) संस्थापित करता हूँ ॥ २८ ॥

शिक्षा—द्यावापृथिवीकी उत्पत्तिके साथ ही जीवोंकी उत्पत्ति भी होती है। वह नित्यस्वरूप वाला जीव अपने कर्मानुसार मनुष्यादि योनियोंको प्राप्त होता है। शरीरमें प्राप्त हुए जीवका विशेष आश्रय सुषुम्ना नाड़ीगत सप्त प्राणचक्र हैं ॥ २८ ॥

शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते रयिम् ।
ये पृणन्ति प्र च यच्छन्ति सर्वदा ते दुह्रते दक्षिणां सप्तमातरम् ॥२९

( नृचक्षसः शतधारं वायुं स्वर्विदमर्कं रयिमभिचक्षते ) नृचक्षसो देवा इन्द्रियाणि "देवा वै नृचक्षसः" ( शत० ८ । ४ । २ । ५ ) शतधारमसंख्यधारायुतमसंख्यनाड़ीप्रवाहयुक्तं वायुं वातं स्वर्विदं तज्ज्ञाविदं सुखहेतुकमर्कमग्नितत्वमुष्माणं पित्तमितियावत् "अग्निर्वा अर्कः" ( १० । ४ । १ । २२ ) रयिमुदकं पुष्टिदं श्लेष्मतत्वम् "अग्निना रयिमश्नवत्पोषमेव दिवे दिवे" इत्युक्तं च । अभिचक्षतेऽभिपश्यन्ति-अनुभवन्ति-अभिगच्छन्ति । शरीरे वातपित्तकफरूपेण वाय्वग्निजलानि वर्तन्ते । उक्तं च सुश्रुतचरकयोः—

विसर्गादानविक्षेपैः सोमसूर्यानिला यथा । धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥

अत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निरिति ? आहोस्वित्पित्तमेवाग्निरिति ? अत्रोच्यते न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते, आग्नेयत्वात् ॥

"......श्लेष्मा मधुरशीतलः । स तत्रस्थ एव स्वशक्त्या शेषाणां श्लेष्मस्थानानां शरीरस्य च उदककर्मणा अनुग्रहं करोति ।" सुश्रुते (सूत्र० अ० २१ । ८ । ६ । १४ )

"वायुस्तन्त्रयन्त्रधरः प्राणोदानसमानव्यानापानात्मा प्रवर्तकश्चेष्टानामुच्चावचानाम् ०।

अग्निरेव शरीरे पित्तान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति तद्यथा पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमुष्मणः० ॥

सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताकुपितः शुभाशुभानि करोति तद्यथा दार्ढ्यं शैथिल्यमुपचयं कार्श्यम्० ।" ( चरके । सू० १२ । ८, ११, १२ )

(ये च सर्वदा पृणन्ति प्रयच्छन्ति) ये च वातादय आन्तरिकपदार्थाः सर्वदा शरीरं पृणन्ति प्रकृतिभूताः सन्तः पालयन्ति, प्रयच्छन्ति विकृताश्च प्रशाम्यन्ति, उक्तं यथा "विकृताऽविकृता देहं घ्नन्ति ते वर्तयन्ति च" ( अष्टांगहृदये० सू० १ । ८ ) ( ते सप्तमातरं दक्षिणां दुह्रते ) त एव वातादयः सप्तमातरं सप्तमातारो निर्मातारो यस्यास्तां दक्षिणां भोगरूपां दुह्रते प्रपूरयन्ति सम्पादयन्ति शुक्रादिभिः सप्तधातुभिः सम्पन्नो भोगोऽत्र दक्षिणा ॥ २९ ॥

भावार्थ—( नृचक्षसः ) प्राणियों को स्व स्व व्यापार में प्रवृत्त करने वाली इन्द्रियाँ (शतधारं वायुम्) असंख्य नाड़ी प्रवाहोंसे युक्त शरीरान्तर्गत आयुर्वैदिक वात तत्वको ( स्वर्विदमर्कम् ) तेजनिमित्तक पित्त तत्वको ( रयिम् ) पुष्टिकारक कफ धातुको (अभिचक्षते) प्राप्त होती हैं (ये च सर्वदा) जो वात, पित्त,कफ सदा (पृणन्ति)

शरीर का पालन करते हैं ( प्रयच्छन्ति ) विकृत होकर शरीरका शमन करते हैं ( ते सप्तमातरम् ) वे वात, पित्त, कफ शुक्रादि सात धातुओं से निर्मित ( दक्षिणां दुह्रते ) भोगार्थ प्राप्त होने वाली कायारूप दक्षिणाको सम्पादन करते हैं ॥ २६ ॥

शिक्षा—शुक्रादि सात धातुओंसे युक्त तथा इन्द्रियोंके आयतन भोगरूप शरीरको वात, पित्त, कफ मूलतत्व जीवनधारण और पोषणकी शक्ति प्रदान करते करते हैं ॥ २६॥

**कोशं दुहन्ति कलशं चतुर्बिलमिडां धेनुं मधुमतीं स्वस्तये ।**
**ऊर्जं मदन्तीमदितिं जनेष्वग्ने मा हिंसीः परमे व्योमन् ॥ ३० ॥**

( अग्ने जनेष्विडां धेनुं मधुमतीमूर्जं मदन्तीमदितिं मा हिंसीः ) अग्ने हे वैश्वानराग्ने ! त्वं जनेषु जायमानेषु प्राणिषु वर्तमानामिडामिडानाम्नीं धेनुं धेनुरूपां नाडीं मधुमतीं धेनुं पिङ्गलां नाडीमूर्जं मदन्तीं धेनुमूर्जं विराजं चेतनां मदन्तीं हर्षयन्तीम् "उर्ग्विराट्" ( तै० १ । २ । २ । २ ) "वैराजो वै पुरुषः" ( तां० २ । ७ । ८ । १६ ) अदितिं धेनुमखण्डनीयां सुषुम्नानाडीम् । "छिद्यते ध्यानयोगेन सुषुम्नैका न छिद्यते" ( क्षुरिकोपनिषदि १८ ) "या प्राणेन सम्भवति-अदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायते" ( कठो० ४ । ७ ) प्राणेन सह सङ्गच्छतेऽदितिः सुषुम्नानाडी तत्र च सप्तचक्राणि प्राणकेन्द्राणि प्राणमर्माणि मुण्डके यथा "सप्त इमे लोका येषु चरन्ति प्राणाः" ( मुण्ड० २ । १ । ८ ) मा हिंसीर्न विनाशय । यतो हीमा नाड्यः ( परमे व्योमन् स्वस्तये कोशं चतुर्बिलं कलशं दुहन्ति ) परमे पूर्णे शतवर्षके व्योमन् संवत्सरे काले "व्योमा हि संवत्सरः" ( शत० ८ । ४ । १ । ११ ) स्वस्तये सु-अस्तित्वे समीचीनस्थिरत्वे कोशं प्रत्येकं फुप्फुसयकृत्प्लीहादिकं चतुर्बिलं चतुश्छिद्रं कलशं कलनस्वभावं रक्तप्रवेशनिकासशब्दवन्तं जीवनसमयसंख्यानप्रवृत्तिकं हृदयरूपं कलशं दुहन्ति चेतनया प्रपूरयन्ति । 'कल शब्दसंख्यानयोः' ॥ ३० ॥

भावार्थ—( अग्ने ) शरीरके अन्दर वर्तमान हे वैश्वानर अग्ने ! तू (जनेषु) उत्पन्न हुए सभी प्राणियोंके अन्दर वर्तमान ( ईडां धेनुम् ) ईडा नाम वाली धमनी को या नाड़ी को ( मधुमतीम् ) पिङ्गला नाड़ी को ( ऊर्जं मदन्तीमदितिम् ) जीवरूप चेतना को हर्षाती हुई अखण्डनीय सुषुम्ना नाड़ीको ( मा हिंसीः ) मत हिंसित कर । क्योंकि ये सभी नाड़ियां ( परमे व्योमन् ) पूर्णकाल अर्थात् सौ वर्षकी आयु तक ( स्वस्तये ) स्थिरताके लिये ( कोशम् ) प्रत्येक फुप्फुसयकृत् प्लीहा आदि को ( चतुर्बिलं कलशम् ) और चारछिद्र वाले रक्तप्रवेश-निकासके कलकल शब्दयुक्त जीवन-

संमयको संख्या करने वाले हृदय को ( दुहन्ति ) चेतनासे प्रपूरण करती हैं ॥ ३० ॥

शिक्षा—प्राणियोंके अन्दर ईडा, पिङ्गला और सुषुम्ना नाड़ियां प्रधान रूपसे विद्यमान हैं जो प्राणियोंकी पूर्ण आयुपर्यन्त जीवनीके लिये यकृत् प्लीहा आदि पिण्ड और हृदयको जीवनरससे पूर्ण करती हैं ॥ ३० ॥

एतत् ते देवः सविता वासो ददाति भर्तवे ।
तत् त्वं यमस्य राज्ये वसानस्तार्प्यं चर ॥ ३१ ॥

( सविता देव एतद् वासो भर्तवे ते ददाति ) सविता उत्पादको देव एतद् वासः शरीरं भर्तवे भर्तुम् 'तुमर्थे तवेन् प्रत्ययः' ते तुभ्यं ददाति "त्वगिव वासः" (शत ४।३।४।२६) ( त्वं यमस्य राज्ये वसानस्तत्तार्प्यं चर ) हे जीव त्वं यमस्य यमनशीलस्य कालस्य राज्ये वसानो धारयन् तच्छरीरं तार्प्यं तर्पणीयं सुखमयं चर सम्पादय ॥ ३१ ॥

भावार्थ—( सविता देवः ) उत्पादकदेव (एतद् वासः) इस शरीरको ( भर्तवे ते ) तेरे लिये धारण करनेको ( ददाति ) देता है ( त्वं यमस्य राज्ये ) हे जीव ! तू यमनशील समयके अधीन ( वसानः ) धारण करता हुआ ( तत् तार्प्यम् ) उस शरीर को सुखनिमित्त ( चर ) सम्पादन कर ॥ ३१ ॥

शिक्षा—ईश्वरने संसारके अन्दर प्रेयः और श्रेयः सुखोंके सम्पादन करनेके लिये जीवात्मा को शरीर प्रदान किया है अतः यावत् जीवनकाल है उसके अन्दर उक्त शरीरको सुखसम्पादन का हेतु बनाना चाहिये ॥३१॥

धाना धेनुरभवद् वत्सो अस्यास्तिलो भवत् ।
तां वै यमस्य राज्ये अक्षितामुपजीवति ॥ ३२ ॥

( धाना धेनुरभवत् तिलोऽस्या वत्सोऽभवत् ) धानाऽस्मिन् शरीरे धारणशीला नाडी धेनुरभवद् । तिलो मांसादिग्रन्थिरस्या अस्या धेन्वा वत्सोऽभवत् ( यमस्य राज्ये तां वै अक्षितामुपजीवति ) यमस्य राज्ये कालस्य राज्ये तां नाडीरूपां धेनुमेष ग्रन्थिरूपो वत्स उपजीवत्याश्रयति ॥३२॥

भावार्थ—( धाना धेनुरभवत् ) इस शरीरमें धारणशील बन्धनरूप नाड़ी धेनु के समान है ( तिलोऽस्या वत्सोऽभवत् ) मांसादि ग्रन्थि उस धेनुका वत्सके तुल्य है ( यमस्य राज्ये ) कालके अधीन ( तां वै अक्षिताम् ) उस नाड़ी रूप धेनुका ( उपजीवति ) उक्त मांसादि ग्रन्थि आश्रय लेती है ॥३२॥

शिक्षा—शरीरके अन्दर रक्तवाहक नाड़ियां विद्यमान हैं और उनके साथ

क्वचित् २ मांस ग्रन्थियां या नाड़ीग्रन्थियां भी हैं । जो उक्त नाड़ियोंमें से रिसते हुए रक्तको अपने अन्दर ग्रहण करती हैं ॥ ३२ ।

**एतास्ते असौ धेनवः कामदुघा भवन्तु । एनीः श्येनीः**
**सरूपा विरूपास्तिलवत्सा उप तिष्ठन्तु त्वात्र ॥ ३३ ॥**

( असौ त एता धेनवः कामदुघा भवन्तु ) असौ हे जीव ! एता धेनवो धेनुरूपाः शिराः कामदुघा आनुकूल्यसम्पादका भवन्तु ( अत्रैनीः श्येनीः सरूपा विरूपास्तिलवत्सास्त्वोपतिष्ठन्तु ) अत्र शरीरे एनीररुणा वातवहाः शिराः, श्येनीर्गौर्यः श्वेताः कफवहाः शिराः, विरूपा नीलाः पित्तवहाः शिराः, सरूपा रोहिण्यो रक्तवहाः शिराः । शिराणां चातुर्विध्यं सुश्रुते वर्णितम्—

> तत्रारुणा वातवहाः पूर्यन्ते वायुना शिराः ।
> पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात् ॥
> असृग्वहास्तु रोहिण्यः शिरा नात्युष्णशीतलाः ॥ ( सुश्रुते ७ । २० )

तिलवत्साः कोशवत्सास्त्वोपतिष्ठन्तु त्वामाश्रयन्तु त्वदधीना भवन्त्वित्यर्थः ॥ ३३ ॥

भाषार्थ—( असौ ते ) हे जीव ! तेरे लिये ( एता धेनवः ) ये धेनुरूप शिरायें ( कामदुघा भवन्तु ) अनुकूलता की सम्पादक हों ( अत्र ) इस शरीरमें ( एनीः ) अरुण रङ्गकी वातवाहक शिरायें ( श्येनीः ) श्वेत रङ्गकी कफवाहक शिरायें (विरूपाः) नीले रङ्गकी पित्तवाहक शिरायें ( सरूपाः ) रक्तरङ्गकी रक्तवाहक शिरायें ( तिलवत्साः ) मांसग्रन्थियोंको वत्सतुल्य साथ रखती हुई ( त्वोपतिष्ठन्तु ) तेरे शरीरका आश्रय हैं ॥ ३३ ॥

शिक्षा—शरीरके अन्दर चार प्रकारकी शिरायें स्व स्व ग्रन्थियोंके साथ फैली हुई हैं । जो कि वातवाहक, कफवाहक, पित्तवाहक और रक्तवाहक हैं ॥ ३३ ॥

**एनीर्धाना हरिणीः श्येनीरस्य कृष्णा धाना रोहिणीर्धेनवस्ते ।**
**तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः ॥३४॥**

( अस्यैनीर्धाना हरिणीः श्येनीः कृष्णा रोहिणीर्धाना धेनवस्तिलवत्सास्तेऽस्मै विश्वहोर्जं दुहाना अनपस्फुरन्तीः सन्तु ) अस्य जीवस्य ताः पूर्वोक्ता धानाः शिरा एन्यः श्येन्यः कृष्णा रोहिण्योऽपि तिलवत्सा ग्रन्थिवत्सा अस्मै जीवाय हरिण्यो भरिण्यः पोषिका धाना धारणधर्माः शिरा विश्वाहा सर्वदोर्जं देहरसं रक्तादिं दुहानाः प्रपूरयन्त्योऽनपस्फुरन्तीरुचितं स्फुरमाणाः सञ्चलन्त्यः सन्तु ॥ ३४ ॥

भावार्थ—( अस्य ) इस जीवकी ( एनीः धाना हरिणीः श्येनीः कृष्णा रोहिणीर्धाना धेनवरितलवत्साः ) पूर्वोक्त अरुण रङ्ग वाली वातवाहक, श्वेतरङ्गकी कफवाहक, नीले रङ्गकी पित्तवाहक, रक्तरङ्गकी रक्तवाहक शिरायें ग्रन्थियोंके साथ ( अस्मै ते ) इस तुझ जीवके लिये ( विश्वाहा ) सदा ( ऊर्जं दुहानाः ) जीवनके लिये आवश्यक रस आदिको सम्पादन करती हुईं ( अनपस्फुरन्तीः सन्तु ) उचितरूप से स्फुरती हुई अपने २ कार्यके लिये गति करती हुई विद्यमान रहें ॥ ३४ ॥

शिक्षा—पूर्वोक्त रक्तवातादिवाहक शिरायें स्व स्व ग्रन्थियोंके साथ उचित रूपसे स्पन्दन करती रहती हैं ॥ ३५ ॥

**वैश्वानरे हविरिदं जुहोमि साहस्रं शतधारमुत्सम् ।**
**स बिभर्ति पितरं पितामहान् प्रपितामहान् बिभर्ति पिन्वमानः ॥३५॥**

( वैश्वानरे-इदं साहस्रं शतधारमुत्सं हविर्जुहोमि ) वैश्वानरेऽग्नौ शरीरान्तवर्तिन्यग्नौ "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्य घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतं घोषं शृणोति" ( श० १४।८।१०।१ ) साहस्रं सहस्रप्रकारं शतधारमसंख्यनाडीशाखमुत्सं कोशाख्यं हविर्जुहोमि स्थापयामि ( स पिन्वयानो बिभर्ति ) यतः स वैश्वानरः पिन्वमान एवं सेवमानो बिभर्ति त्वां हे जीव ! धारयति पोषयति ( पितरं पितामहान् प्रपितामहान् बिभर्ति ) तव पितरं पितामहान् प्रपितामहांश्च बिभर्ति धारयति पोषयति ॥ ३५ ॥

भावार्थ—( वैश्वानरे ) शरीरके अन्तवर्ती अग्निमें (इदं साहस्रं शतधार मुत्सं हविः) सहस्र प्रकारसे असंख्य नाड़ी शाखाओंसे युक्त कोशरूप हविको (जुहोमि) रखता हूँ ( स पिन्वमानो बिभर्ति ) जिससे कि वह सेवित हुई अग्नि तुझको धारण करती है ( पितरं पितामहान् प्रपितामहान् बिभर्ति ) न केवल तुझे ही अपितु वह वैश्वानर अग्नि तेरे पिता, पितामह, प्रपितामहको भी धारण करती रही है ॥ ३५ ॥

शिक्षा—शरीरके अन्दर वैश्वानर नामसे अग्नि विद्यमान है जो अपनी उष्मा सब कोशों आशयों और शिराओंको पहुँचाती हुई मनुष्य का धारण पोषण करती है ॥ ३५ ॥

**सहस्रधारं शतधारमुत्समक्षितं व्यच्यमानं सलिलस्य पृष्ठे ।**
**ऊर्जं दुहानमनपस्फुरन्तमुपासते पितरः स्वधाभिः ॥ ३६ ॥**

( सलिलस्य पृष्ठे सहस्रधारं शतधारमुत्सं व्यच्यमानमक्षितमूर्जं दुहान-

मनपस्फुरन्तं पितरः स्वधाभिरुपासते ) सलिलस्योदकस्य मेघस्य पृष्ठे वर्तमानं सहस्रं शतधारमुत्सं जलमयं तनुबीजं पितरो जनकाः स्वधाभिः स्वधारणशक्तिभिरक्षितमविनाशिनं व्यच्यमानं व्यक्तिभावमाप्नुवन्तमूर्जं दुहानं खाद्यरसं गृह्णन्तमनपस्फुरन्तं स्वशक्त्या गतिमन्तमुपासते सेवन्ते ॥ ३६ ॥

भाषार्थ—( सलिलस्य पृष्ठे ) मेघमण्डलमें ( सहस्रधारं शतधारमुत्सम् ) असंख्यजलविन्दुमयसमूहको, जो गर्भबीज ( व्यच्यमानम् ) पुरुषादि शरीरके व्यक्तिभावको प्राप्त होनेवाले ( अक्षितम् ) अविनाशी जीवशक्तिको ( ऊर्जं दुहानम् ) शरीरधारणार्थ रस ग्रहण करते हुए को ( अनपस्फुरन्तम् ) कुटिलगतिरहितको ( पितरः ) अपने जनक ( स्वधाभिः ) स्वधारण शक्तियोंसे ( उपासते ) सेवन करते हैं या ग्रहण करते हैं ॥ ३६ ॥

शिक्षा—मेघमण्डलमें सब जीवोंका गर्भबीज है उसको माता-पिता लोग अपने अन्दर निज शक्तियोंसे धारण करते हैं जोकि पुरुषादि व्यक्तिशरीरमें प्रगट होता है ॥ ३६ ॥

यहां पर व्यष्टियज्ञका प्रकरण समाप्त होता है और जन्मसे लेकर मृत्युपर्यन्त जीवनचर्याका प्रकरण प्रारम्भ होता है—

**इदं कसाम्बु चयनेन चितं तत् सजाता अवपश्यतेत ।**
**मर्त्योयममृतत्वमेति तस्मै गृहान् कृणुत यावत्सबन्धु ॥ ३७ ॥**

( इदं कसाम्बु चयनेन चितं तत्सजाता अवपश्यतेत ) इदं कसाम्बु गतिमज्जलमिव पुरुषबीजमात्मतत्वं चयनेन स्वकर्मचयनेन निजकर्मानुसारं प्राप्तं तद् यूयं सजाता बन्धवोऽवपश्यत, अत एव-इत-आगच्छत । ( अयं मर्त्योऽमृतत्वमेति तस्मै यावत्सबन्धु गृहान् कृणुत ) अयं मर्त्यो मनुष्योऽमृतत्वं ध्येयरूपेणामृतत्वं मोक्षपदमेति तस्मात् तस्मै जीवाय यूयं यावत्सबन्धु सर्वेऽपि बन्धवो गृहान् तद्योग्यानि स्थानानि कृणुत कुरुत ॥ ३७ ॥

भाषार्थ—( इदं कसाम्बु ) यह गतिशील जलके समान पुरुषबीज ( चयनेन चितम् ) निजकर्मों से युक्तहुआ हुआ है ( तत्सजाताः ) तुम बन्धुजन ( अवपश्यत ) इसको देखो ( एत ) इसके समीप आओ या प्राप्त होओ ( अयं मर्त्यः ) यह सन्तान ( अमृतत्वमेति ) ध्येयरूप मोक्षपदको प्राप्त करता है । इसलिये ( तस्मै यावत्सम्बन्धु ) उसके लिए तुम सब बन्धुजन ( गृहान् कृणुत ) योग्य स्थानोंको बनाओ ॥ ३७ ॥

शिक्षा—मनुष्य कर्मानुसार जन्मता है, जन्मे हुए बालकके लिये उसके योग्य स्थानों का प्रबन्ध करना चाहिये संसारमें मनुष्यजन्म का लक्ष्य मोक्षप्राप्ति है इसलिये अपने और अपनी सन्तानके प्रति ऐसे साधन और कर्मोंका सञ्चय करना चाहिए जिससे ध्येयरूप मोक्ष प्राप्त हो सके ॥ ३७ ॥

इहैवैधि धनसनिरिहचित्त इहक्रतुः ।
इहैधि वीर्यवत्तरो वयोधा अपराहतः ॥ ३८ ॥

( इहैव धनसनिरेधि ) इहास्मिन्नेव शरीरे त्वं धनसनिरैश्वर्यसम्भागी भव ( इहचित्त इहक्रतुः ) इह शरीरे चित्तं चेतनत्वं यस्य सोऽयमिहचित्तः शरीरे चेतनशील एधि भव, इहक्रतुः, इह शरीरे क्रतुः कर्म यस्य स इहक्रतुः शरीरे कर्मशीलो भव "क्रतुः कर्मनाम" ( नि० २ । १ ) ( इहवीर्यवत्तरो वयोधा अपराहत एधि ) हे जीव ! इह शरीरे त्वं वीर्यवत्तरोऽतिवीर्यवान् वयोधा आयुर्धारकोऽपराहतोऽनाघातः स्वस्थ एधि भव इत्याशीर्वादः ॥ ३८ ॥

भाषार्थ—( इहैव धनसनिरेधि ) हे बालक ! तू इस शरीरमें ऐश्वर्यका भागी हो ( इहचितः ) इस शरीरमें तू सावधान बुद्धिमान् हो ( इहक्रतुः ) इसी शरीरमें तू पुण्यकर्मशील बन ( इह वीर्यवत्तरः ) इस शरीरमें तू अत्यन्त बलवान् ( वयोधाः ) आयुवाला ( अपराहतः ) स्वस्थ ( एधि ) रह ॥ ३८ ॥

शिक्षा—सन्तानके जन्म होने पर अर्थात् जातकर्म संस्कारके समय बन्धु बान्धव और इष्टमित्र बालकको आशीर्वाद दें कि हे बालक ! तू ऐश्वर्यभागी, बुद्धिमान्, कर्मशील, अतिबलवान्, आयुष्मान्, तथा स्वस्थ रह ॥ ३८ ॥

पुत्रं पौत्रमभितर्पयन्तीरापो मधुमतीरिमाः ।
स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु ॥३९॥

( इमा मधुमतीरापः पुत्रं पौत्रमभितर्पयन्तीः ) इमा मधुमतीराप ओषधिरसाः "ओषधयो मधुमतीः" ( तै० ३ । २ । ८ । २ ) पुत्रं पौत्रमभितर्पयन्त्यः सत्यः ( पितृभ्योऽमृतं स्वधां दुहाना आपो देवीरुभयांस्तर्पयन्तु ) अथ च पितृभ्योऽपि स्वधामन्नमन्नशक्तिममृतं प्राणं च दुहानाः प्रपूरयन्त्यः सत्य आपो देवीर्दिव्य उभयान् सन्तानं पितॄंश्च तर्पयन्तु । "प्राणा वा अमृतम्" ( श० १४ । ४ । ४ । ३ ) ॥ ३९ ॥

भाषार्थ—( इमा मधुमतीरापः ) यह ओषधि जल (पुत्रं पौत्रमभितर्पयन्तीः) पुत्र पौत्रादि नवजात सन्तानको तृप्त करता है ( पितृभ्योऽमृतं स्वधां दुहानाः ) और

माता पिता आदिको अन्नशक्ति और प्राणशक्तिको देनेवाला ( आपो देवीः ) उक्तदिव्य गुणजल (उभयांस्तर्पयन्तु) सन्तान और सन्तानके माता पिता आदिको एवं दोनोंको तृप्त करता है ॥ ३६ ॥

शिक्षा—नवजात बालकको उसकी स्वस्थताके लिये ओषधिजल तथा प्रसूता माता को भी औषधसेवन कराना चाहिये ॥ ३६ ॥

**आपो अग्निं प्रहिणुत पितृँरुपेमं यज्ञं पितरो मे जुषन्ताम् ।**
**आसीनामूर्जमुप ये सचन्ते ते नो रयिं सर्ववीरं नियच्छान् ॥४०॥**

( आपो अग्निं पितॄन् प्रहिणुत ) आपः पूर्वोक्ता ओषधिरसा ओषधिसारा अग्निं जठराग्निं पितॄन् प्राणान् प्रति प्रहिणुत प्रेरयन्ति यतो हि ओषधिरसैः जठराग्निः प्रदीप्यते स च प्राणानाप्नोति अत एव ( इमं यज्ञं मे पितरो जुषन्ताम् ) इमं यज्ञं शरीरे पाकरूपं यज्ञं मे पितरः प्राणा जुषन्तां सेवन्ते ( य आसीनामूर्जमुपसचन्ते ते नो रयिं सर्ववीरं नियच्छान् ) ये प्राणा आसीनामुपस्थितामूर्जमन्नमात्रामुप सचन्ते परिणमन्ति पचन्ति ते प्राणा अस्मभ्यं रयिं पुष्टिभोगं सर्ववीरं नियच्छान् नियच्छन्तु स्थापयन्ति । लडर्थे लोट् ॥ ४०॥

भावार्थ—( आपः ) पूर्वोक्त ओषधिरस ( अग्निम् ) जाठराग्निको (पितॄन्) प्राणोंको ( प्रहिणुत ) प्रेरित अर्थात् उत्तेजित करते हैं ( इमं यज्ञम् ) शरीरके अन्दर पाकरूपमें वर्तमान यज्ञ को ( मे पितरः ) मेरे प्राण ( जुषन्ताम् ) सेवन करें या सेवन करते हैं ( य आसीनाम् ) जो उपस्थित ( ऊर्जम् ) अन्नमात्रा को ( उपसचन्ते ) पकाते है ( ते नः ) वे हमारे लिये ( रयिं सर्ववीरम् ) सब प्रकारसे वीर्ययुक्त पुष्टियुक्त भोग को ( नियच्छान् ) नियत करते हैं ॥ ४० ॥

शिक्षा—आयुर्वैदिक रीतिसे ओषधियोंका सेवन करके शरीरस्थ जाठराग्नि और प्राणोंकी शक्तिको बढ़ाना चाहिये क्योंकि उक्त ओषधिमात्राके सेवनसे शरीरमें पुष्टि प्राप्त होती है ॥ ४० ॥

**समिन्धते अमर्त्यं हव्यवाहं घृतप्रियम् ।**
**स वेद निहितान् निधीन् पितॄन् परावतो गतान् ॥४१॥**

(घृतप्रियममर्त्यं हव्यवाहं समिन्धते ) घृतप्रियं रसप्रियममर्त्यं यावज्जीवं तावत्सततं वर्तमानं हव्यवाहं ग्राह्यरसवोढारं जाठराग्निमयं जीवः समिन्धते विविध-भोजनैर्दीपयति । यतः ( स निहितान् निधीन् परावतो गतान् पितॄन् वेद ) सोऽन्तरा-

ग्निर्निहितान् शरीरे स्थितान् निधीन् कोशान् अवयवान् परावतो गतान् सर्वत्र विस्तृतान् पितॄन् प्राणान् वेद प्राप्तवानस्ति ॥ ४१ ॥

भावार्थ—( घृतप्रियम् ) अन्न रसको चाहने वाले ( अमर्त्यम् ) यावज्जीवन वर्तमान ( हव्यवाहम् ) अन्नरसके वहन करने वाली जाठराग्निको ( समिन्धते ) यह जीव विविध भोजनद्वारा प्रदीप्त करता है ( स निहितान् निधीन् ) वह अन्तराग्नि शरीरके अन्दर वर्तमान कोशों को या अवयवोंको ( परावतो गतान् ) सर्वत्र फैले हुए ( पितॄन् ) प्राणों को ( वेद ) प्राप्त है ॥ ४१ ॥

शिक्षा—जाठराग्नि जो कि अन्नरसकी क्षुधा उत्पन्न करती और यावज्जीवन शरीरके अन्दर उक्त खाद्यरसका परिणाम शरीरके प्रत्येक कोश अवयव और प्राणतन्तुओंतकमें पहुँचाती है उसको विविध उचित भोजनोंसे प्रदीप्त करना चाहिये ॥ ४१ ॥

**यं ते मन्थं यमोदनं यन्मांसं निपृणामि ते ।**
**ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः ॥४२॥**

( यं ते मन्थं यमोदनं यत्ते मांसं निपृणामि ) हे जीव ! ते तव शरीरे यं मन्थं मन्थनीयं रक्तमोदनमुन्दनीयं रेतः "रेतो वा ओदनः" ( शत० १३ । १ । १ । ४ ) यद्वा मांसं निपृणामि यथास्थानं यथावश्यकं नियोजयामि । अतः ( ते ते स्वधावन्तो मधुमन्तो घृतवन्तः सन्तु ) ते ये स्वधावन्तोऽन्नवन्तो मधुमन्तो रसवन्तो घृतवन्तः स्नेहवन्तस्ते तुभ्यं सन्तु सन्ति तानुपयुङ्क्ष्व ॥ ४२ ॥

भाषार्थ—( यं ते मन्थम् ) हे जीव ! तेरे शरीरमें जिस मन्थनीय रक्तको ( यमोदनम् ) जिस शुक्ररूप सारपदार्थको ( यत्ते मांसम् ) तथा जिस मांसको ( निपृणामि ) यथास्थान आवश्यकतानुसार नियुक्त करता हूँ । अतः उनके पोषण के वास्ते ( ते स्वधावन्तो मधुमन्तो घृतवन्तः ) वे अन्नवाले रसवाले और स्नेहवाले पदार्थ ( ते सन्तु ) तेरे लिये हैं तू उनका उपयोग कर ॥ ४२ ॥

शिक्षा—मनुष्य के शरीर में रक्त, शुक्र और मांस ये तीन धातुएं विशेषतः जीवनधारणके निमित्त हैं । इनके पोषणार्थ उत्तम अन्न रस और स्नेह वाले पदार्थों को सेवन करना चाहिये ॥ ४२ ॥

**यास्ते धाना····॥४३॥** (देखो सूक्तसमन्वय) अथर्ववेद १८।४।२६ ( पृष्ठ १६८ )

इदं पूर्वमपरं नियानं येना ते पूर्वे पितरः परेताः ।
पुरोगवा ये अभिशाचो अस्य ते त्वा वहन्ति सुकृतामु लोकम् ॥४४॥

( इदं नियानं पूर्वमपरं येना ते पूर्वे पितरः परेताः ) हे जीव ! इदं नियानं निरयणं नियतस्थानं शरीरं पूर्वं पूर्वतः प्रवृत्तमपरं परभावरहितमग्रेऽपि प्रवर्तिष्यमाणमस्ति येन शरीरेण ते तव पूर्वे पुरातनाः पितरः परेताः संसारयात्रां प्राप्ताः सन्ति ( येऽस्य पुरोगवा अभिशाचः ) येऽस्य शरीरस्य पुरोगवा नेतारोऽभिशाचोऽभिसेवमानाः सन्ति ( त्वा सुकृतां लाकं वहन्ति ) त्वां सुकृतां पुण्यकृतां स्थानं वहन्ति नयन्ति ॥ ४४ ॥

भाषार्थ—( इदं नियानम् ) हे जीव ! यह शरीर ( पूर्वमपरम् ) पहलेसे ही चला आने वाला और आगे भी प्रवृत्त होने वाला है ( येना ) जिस शरीर के साथ अर्थात् शरीर धारण करके ( पूर्वे ते पितराः ) तेरे पूर्वज माता पिता आदि कुटुम्बी ( परेताः ) संसार यात्रा करते हैं और करते थे ( येऽस्य पुरोगवाः ) जो इस शरीर के पूर्व नेता जीवित कुटुम्बी ( येऽभिशाचः ) और जो इस शरीरकी सदा देखभाल करने वाले हैं ( त्वा सुकृतां लोकं वहन्ति ) तुझे उत्तम पुरुषोंको अवस्थामें ले जाते हैं अर्थात् योग्य बनाते हैं ॥ ४४ ॥

शिक्षा—जीवका शरीरधारण करना केवल इसी समयके लिये ही नहीं है किन्तु आत्माके नित्य होनेसे पहलेसे ही चला आता है और आगे भी चलता रहेगा । अतः माता पिता आदि कुटुम्बी जनोंको चाहिये कि अपनी सन्तानको पुण्यवान् बनानेके लिये उसके शरीरका रक्षण पोषण आदि व्यवहार इस प्रकार करें कि जिससे इस जन्म और भविष्य जन्मके लिये उपयोगी हो सके ॥ ४४ ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो हवन्ते सरस्वती दाशुषे वार्यं दात् ॥४५॥

( देवयन्तः सरस्वतीं हवन्ते ) देवयन्त आत्मानं देवं सम्पादयन्तो जनाः सरस्वतीं वाणीं वेदविद्याम् "सरस्वतीति वाङ्नाम" ( नि० १ । ११ ) हवन्ते स्वीकुर्वन्ति । ( तायमानेऽध्वरे सरस्वतीम् ) तायमाने वर्धमानेऽध्वरे वेदारम्भसंस्कारयज्ञे सरस्वतीं वाणीं स्वीकुर्वन्ति ( सुकृतः सरस्वतीं हवन्ते ) सुकर्माणः सरस्वतीं धारयन्ति ( सरस्वती दाशुषे वार्यं दात् ) सरस्वती वाणी विद्या दाशुषे दत्तमनसे जीवाय वार्यं वरणीयं वस्तु दात् ददाति "न विद्यया विना सौख्यम्" इत्युक्तञ्च ॥ ४५ ॥

भावार्थ—( देवयन्तः ) अपने आपको विद्वान् बनानेके इच्छुक जन

( सरस्वतीं हवन्ते ) अध्ययनरूप वाणीका स्वीकार करते हैं ( तायमानेऽध्वरे सरस्वतीम् ) अध्ययनरूप यज्ञमें या वेदारम्भसंस्कारयज्ञमें अभ्यास द्वारा वाणीका स्वीकार करते हैं ( सुकृतः सरस्वतीं हवन्ते ) सुकर्मी भाग्यशाली जन ही विद्याका स्वीकार करते हैं। (सरस्वती दाशुषे) वाणीरूप विद्या मनदेनेवाले पुरुषके लिये ( वार्यं दात् ) उत्तम सुखका प्रदान करती है ॥ ४५ ॥

शिक्षा—उच्चकोटि का विद्वान् बननेके लिये विद्यासे अत्यन्त प्रेम करनेकी आवश्यकता है निज अध्ययन और अध्यापन कालमें भी सदा विद्याभ्यास स्वाध्याय विद्याप्रचार करना चाहिये। विद्याप्राप्ति अपने सौभाग्य और पुण्यकर्मसे ही होती है। जो मनुष्य विद्याप्रचारके लिये अपना तन मन धन देता है विद्या उसीके लिये अपूर्व सुख प्रदान करती है ॥ ४५ ॥

**सरस्वतीं पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।**
**आसद्यास्मिन् बर्हिषि मादयध्वमनमीवा इष आधेह्यस्मे ॥ ४६ ॥**

( पितरो दक्षिणा यज्ञमभिनक्षमाणाः सरस्वतीं हवन्ते ) पितरः शिक्षका दक्षिणा दक्षिणतो यज्ञं ब्रह्मयज्ञं विद्याध्यापनमभिनक्षमाणा अनुतिष्ठन्तः सरस्वतीं वाणीं हवन्ते प्रयुञ्जते ( अस्मिन् बर्हिष्यासद्य मादयध्वम् ) अस्मिन् बर्हिषि यज्ञ आसद्य मादयध्वं यूयं सर्वेऽपि हर्षयत ( अस्मे अनमीवा इष आधेहि ) हे सरस्वति ! अस्मेऽस्मभ्यमनमीवा आरोग्यकरा इष इषितव्याः क्रियाः सम्पादय ॥ ४६ ॥

भाषार्थ—( पितरो दक्षिणा ) शिक्षक लोग शिष्यके दक्षिणमें बैठकर ( यज्ञमभिनक्षमाणाः ) विद्याध्यापन रूपी यज्ञका सेवन करते हुए ( सरस्वतीं हवन्ते ) वाणीका प्रयोग करते हैं ( अस्मिन् बर्हिषि ) इस अध्यापन स्थानमें ( आसद्य ) बैठकर ( मादयध्वम् ) विद्यादानसे प्रसन्न करो ( अस्मे अनमीवाः ) तथा हमारे लिये आरोग्यकारक ( इष आधेहि ) इष्ट क्रियाओंका हे सरस्वति ! तू आधान करा अर्थात् उचित आचरणकी तरफ ले चल ॥ ४६ ॥

शिक्षा—शिक्षक लोग शिक्षणालयमें बैठकर विद्यार्थियोंको विद्याध्यापन और सत्याचरणादिके उपदेशसे सर्व प्रकार योग्य बनावें ॥ ४६ ॥

**सरस्वति या सरथं ययाथोक्थैः स्वधाभिर्देवि पितृभिर्मदन्ती ।**
**सहस्रार्घमिडो अत्र भागं रायस्पोषं यजमानाय धेहि ॥ ४७ ॥**

( या सरस्वति देव्युक्थैः स्वधाभिः पितृभिर्मदन्ती सरथं ययाथ ) या

सरस्वति सरस्वती देवी वाक्शक्तिरुक्थैर्मन्त्रोच्चारणैः स्वधाभिः सत्कारैः सह पितृभिः शिक्षकैः सङ्गता मदन्ती जनान् हर्षयन्ती सती सरथमेकशरीरं ययाथ याति प्राप्नोति। 'अत्र पुरुषलकारव्यत्ययौ' (अत्र सहस्रार्घमिडो भागं रायस्पोषं यजमानाय धेहि) अत्राध्ययनाध्यापनयज्ञे सा सहस्रार्घं रायस्पोषं भूमानमसंख्यातगुणमिडो भागं स्तवनभागं विद्याप्रकाशं यजमानाय अध्येत्रे जनाय धेहि धारयति। "भूमा वै रायस्पोषः" (श० ३।५।२।१२)॥ ४७॥

भाषार्थ—( या सरस्वति देवि ) यह जो अध्ययनाध्यापनरूप विद्या है वह ( उक्थैः ) मन्त्रोच्चारणों तथा ( स्वधाभिः ) सत्कारोंके साथ ( पितृभिः ) शिक्षकोंसे सङ्गत हुई ( मदन्ती ) मनुष्योंको सुख पहुँचाती हुई ( सरथम् ) एक शरीर होकर ( ययाथ ) प्राप्त होती है ( अत्र सहस्रार्घं रायस्पोषमिडो भागम् ) अध्ययनाध्यापन रूपी यज्ञमें बहुत गुणयुक्त विस्तृत या महान् विद्याप्रकाशको ( यजमानाय ) अध्ययन करने वालेके लिये ( धेहि ) धारण कराती है॥ ४७॥

शिक्षा—विद्वानोंका सत्कार और सत्सङ्ग करके विद्याध्ययन करना चाहिये मनुष्यके ज्ञानका विकास विद्याध्ययन से ही होसकता है॥ ४७॥

**पृथिवीं त्वा पृथिव्यामा वेशयामि देवो नो धाता प्रतिरात्यायुः।**
**परापरैता वसुविद्वो अस्त्वधामृताः पितृषु सं भवन्तु॥ ४८॥**

( पृथिवीं त्वा पृथिव्यामावेशयामि ) पृथिवीं पृथिवीरूपं पार्थिवशरीरयुक्तं त्वा त्वां हे बालक! पृथिव्यां भूमावावेशयाम्यासयामि (धाता देवो न आयुः प्रतिराति) धाता धारको जगदीशदेवो यश्च नोऽस्माकं गुरुशिष्याणामायुः प्रतिराति विस्तारयति ( वसुविद् वोऽस्तु ) यश्च वो युष्माकं बालकानां वसुविद् विद्याध्ययनरूपयज्ञवेत्ता भवतु भवति "यज्ञो वै वसुः" (श० १।७।१।६) ( अधामृताः पितृषु सम्भवन्तु ) अथ विद्याध्ययनानन्तरं सर्वेऽपि शिष्या अमृताः सन्तः पितृषु अस्मादृशेषु शिक्षकेषु सम्भवन्तु सम्पन्ना भवन्तु। तस्मात् ( परापरैत ) यूयं गुरुशिष्यपरम्परया व्यवहरत॥ ४८॥

भाषार्थ—( पृथिवीं त्वा ) हे बालक तू पार्थिव शरीरको धारण किये हुए है। अत एव तुझे ( पृथिव्यामावेशयामि ) मैं पृथिवी पर बिठलाता हूँ ब्रह्मचर्यकाल में पृथिवी पर ही सोने आदि की आज्ञा देता हूँ। ( धाता देवः ) विश्वका धारक जगदीशदेव ( आयुर्नः प्रतिराति ) हम गुरु शिष्योंकी आयुको बढ़ाता है ( वसुविद् वोऽस्तु ) जोकि तुम्हारे अध्ययनरूप यज्ञोंका जानने वाला है ( अधामृताः पितृषु

सम्भवन्तु ) विद्याध्ययन के अनन्तर मरणभयसे रहित हुए हमारे जैसे शिक्षकोंमें हो जाओगे ( परापरैत ) इसलिये तुम गुरुशिष्य परम्परासे व्यवहार करो ॥ ४८ ॥

शिक्षा—गुरुकुलमें विद्याध्ययन करते हुए विद्यार्थियों को गृहस्थोंके समान उत्तम शय्या आदि का प्रयोग नहीं करना चाहिये । इस प्रकार विद्याध्ययन की तपस्यामें जगद्रक्षक परमेश्वर सहायक होता है । विद्यासमाप्तिके पश्चात् अपने गुरुओंके समान अध्यापन आदि द्वारा विद्या प्रचार करना आवश्यक है ॥ ४८ ॥

**आ प्र च्यवेथामप तन्मृजेथां यद्वा वामभिभा अत्रोचुः ।**
**अस्मादेतमघ्न्यौ तद्वशीयो दातुः पितृष्विहभोजनौ मम ॥ ४९ ॥**

( यदभिभा अत्रोचुस्तद्वां प्राच्यवेथामपमृजेथम् ) हे दम्पती ! यत्किञ्चिद्-भिभा निजोपदेशेन विद्यादानेनान्यान सम्यग् भान्ति ये ते विद्वान्सोऽत्र गृहस्थ-धर्म उचुरुपदिष्टवन्तस्तद्युवां प्राच्यवेथां प्रकृष्टं गृहीतम, अपमृजेथां विचारेण संशोध्याचरतम ( अघ्न्यावस्मात पितृष्वेतम् ) अघ्न्यौ हे अहिंसनीयौ दम्पती ! युवा-मस्माद्-मार्गान पितृषूपदेशकेषु निरन्तरं स्थित्वा विद्यां प्राप्नुतम ( मम दातुर्वशीय इह भोजनौ ) मम विद्याप्रयच्छतुर्भोग्यमिह पालयितारौ युवां स्थः । वसीय इति सायण-सम्मतपाठः ॥ ४९ ॥

भावार्थ—( यद्वामभिभा अत्रोचुः ) हे पतिपत्नी ! जो तुमको उपदेशक लोग गृहस्थ धर्म के सम्बन्धमें उपदेश करें ( तत्प्राच्यवेथामपमृजेथाम् ) तुम उसको ग्रहण करो और विचारके द्वारा संशोधन करके उसका आचरण करो ( अघ्न्यावस्मात् पितृष्वेतम् ) हे दयनीय पतिपत्नी ! इस मार्ग से तुम उपदेशकोंके अन्दर बारम्बार स्थिर होकर विद्या प्राप्त करो (मम दातुर्वसीयः) मुझ विद्यादान देने वालेके इस भोग्य धन के ( इहभोजनौ ) इस संसार में तुम रक्षा करने वाले होवो ॥ ४९ ॥

शिक्षा—गृहस्थमें पतिपत्नीको धार्मिक विद्वानोंसे उपदेश ग्रहण करना और तदनुसार आचरण करना चाहिये जहां कहीं भी विद्वानोंका सत्सङ्ग प्राप्त हो वहां पहुँचकर लाभ उठाना चाहिये। इस प्रकार धर्मोपदेशोंके अनुसार गृहस्थमें रहने से दुःखोंसे अलग हो सकते हैं। धार्मिक विद्वानोंकी विद्या तथा उनके उपदेशों की रक्षा तन मन धन द्वारा करना गृहस्थजनोंका कर्तव्य है ॥ ४९ ॥

यहां तक जीवनवृत्त था अब कायापरिणाम और देहान्तकी परिस्थतियों का आरम्भ होता है—

**एयमगन् दक्षिणा भद्रतो नो अनेन दत्ता सुदुघा वयोधाः ।**
**यौवने जीवानुपपृञ्चती जरा पितृभ्य उप सं पराणयादिमान् ॥५०॥**

(अनेन दत्तेयं दक्षिणा सुदुघा वयोधा नो भद्रत आगन्) अनेनेश्वरेण दत्तेयं दक्षिणा तनुरूपा दक्षिणा या चैकोनत्रिंशत्तममन्त्रोक्ता "दक्षिणां सप्तमातरम्" वयोधा आयुर्धरा नोऽस्मभ्यं भद्रतः कल्याणहेतोरागन् आगच्छति (यौवने जीवानुपपृञ्चती जरा इमान् पितृभ्य उपसम्पराणयात्) सा तनुरूपा दक्षिणा कर्मफलरूपा तनुयौवने युवावस्थायां जीवान सर्वान् प्राणिन उपपृञ्चती सम्यक् प्राप्नुवती सा जरा जीर्णा सती पितृभ्य ऋतुसहचरितसूर्यरश्मिभ्य उपसम्पराणयादुपसमर्पयेत्। लिङर्थे लेट् ॥५०॥

भाषार्थ—(अनेन दत्तेयम्) इस सर्वव्यापक जगदीश देव की प्रदानकी हुई (दक्षिणा सुदुघा वयोधाः) कायारूप दक्षिणा जोकि कर्म फल को दोहन करती है वह आयुको धारण करने वाली (भद्रतो न आगन्) हमको कल्याणके हेतु प्राप्त हुई है (यौवने जीवान् उपपृञ्चती) यौवनकालमें जीवों को उत्तम रूपसे प्राप्त होती है (जरा-इमान् पितृभ्यः) जीर्ण हुई काया इन सब प्राणियोंको ऋतुसहचरित सूर्यरश्मियोंके लिये (उपसम्पराणयात्) समर्पण कर देती है ॥ ५० ॥

शिक्षा—प्राणियोंके कर्मफल भोगार्थ देह प्राप्त होती है जो प्राणी को उस की आयु का सेवन कराते हुए यौवन काल में सम्यक् पूर्ण होकर जब जीर्ण होजाती है तब इन प्राणियों को अर्थात् जीवात्माओं को सूर्यरश्मियों के प्रति समर्पण कर देती है अर्थात् देहपात के अनन्तर जीव पुनर्जन्म आदि के लिये सूर्यरश्मि को प्राप्त होते हैं ॥ ५० ॥

**इदं पितृभ्यः प्र भरामि बर्हिर्जीवं देवेभ्य उत्तरं स्तृणामि ।**
**तदारोह पुरुष मेध्यो भवन् प्रति त्वा जानन्तु पितरः परेतम् ॥५१॥**

(पितृभ्य इदं बर्हिः प्रभरामि) पितृभ्यः सूर्यरश्मिभ्यो जीवात्मानमिदं बर्हिरिदं मेघमण्डलं मेघोदकं शरीरबीजं प्रभरामि प्रधरामि प्रस्थापयामि "बर्हिरुदकनाम" (नि० १ । १२) (उत्तरं जीवं देवेभ्यः स्तृणामि) उत्तरं तदनन्तरं जीवं देवेभ्योऽग्न्यादिभ्यः स्तृणामि क्षिपामि त्यजामि । एवमत्रोदकेन जीवोत्पत्तिर्दर्श्यते "तोयेन जीवान् विससर्ज भूम्याम् (महानारायणोपनिषद् १ । ४) (तदा मेध्यो भवन् पुरुष आरोह) तदा मेध्यो यज्ञियो गर्भाधानयज्ञयोग्यो भवन् हे पुरुष ! आरोह-उत्पद्यस्व 'रुह बीजजन्मनि प्रादुर्भावे च' (पितरस्त्वा परेतं प्रतिजानन्तु) पितरस्ते जनकादयस्त्वां परेतं परागतं प्रगतं प्राप्तं प्रकटीभूतं प्रतिजानन्तु स्वीकुर्वन्ति । ईश्वरोक्तिरियं विज्ञेया ॥५१॥

भा०ार्थ—( पितृभ्यः ) देहपातानन्तर सूर्यरश्मियोंमें प्राप्त जीवात्माको उन सूर्यरश्मियोंसे ( इदं बर्हिः ) इस मेघमण्डल में ( प्रभरामि ) पहुँचाता हूँ ( उत्तरं जीवम् ) इसके अनन्तर जीवात्माको ( देवेभ्यः स्तृणामि ) अग्नि आदि देवोंके प्रति पुनर्जन्म धारण करानेके लिये छोड़ देता हूँ ( तदा मेध्यो भवन् ) उस समय गर्भाधान के योग्य होता हुआ ( पुरुष आरोह ) हे जीव ! तू उत्पन्न हो। ( पितरस्त्वा परेतं प्रतिजानन्तु ) माता पिता आदि जनक शरीरमें प्रकट हुये तुझको स्वीकार करें ॥५१॥

शिक्षा—देहान्तके पश्चात् जीवात्मा सूर्यरश्मियोंको पहुंचकर पुनः मेघमण्डलमें जाता है। वहां गर्भाधानके योग्य बनकर जन्मधारण करता है। माता पिता आदि उसको अपना लेते हैं ॥ ५१ ॥

एदं बर्हिरसदो मेध्यो भूः प्रति त्वा जानन्तु पितरः परेतम्।
यथापरु तन्वं सं भरस्व गात्राणि ते ब्रह्मणा कल्पयामि ॥ ५२ ॥

( इदं बर्हिरासदः ) हे जीव ! त्वमिदं बर्हिरुदकं शरीरबीजमासद आसीदसि ( मेध्यो भूः ) अत एव मेध्यो गर्भयोग्योऽभूर्भवसि (पितरः परेतं त्वा प्रतिजानन्तु) पितरस्ते जनकादयः परेतं प्राप्तं त्वां प्रतिजानन्तु स्वीकुर्वन्ति ( यथापरु तन्वं संभरस्व ) यथापरु यथासन्धि यावत्सन्धि सन्ध्यनुसारं समग्रोचितसन्ध्यनुसारं तन्वं शरीरं सम्भरस्व धारय ( गात्राणि ते ब्रह्मणा कल्पयामि ) गात्राण्यङ्गानि तेऽइमीश्वरो ब्रह्मणा स्वकीयब्रह्मरूपेणोत्पादनशक्त्या कल्पयाम्युत्पादयामि ॥ ५२ ॥

भाषार्थ—( इदं बर्हिरासदः ) हे जीव ! तू इस मेघमण्डलको प्राप्त होता है ( मेध्यो भूः ) अत एव गर्भयोग्य होता है ( पितरः परेतं त्वा प्रतिजानन्तु ) तेरे माता पिता आदि जनक तुझे अपनाते हैं इसलिये निश्चिन्त होकर ( यथापरु तन्वं सम्भरस्व ) जैसी और जितनी सन्धि होनी चाहियें उन समग्र सन्धियोंके साथ शरीर को धारण कर ( गात्राणि ते ) तेरे अङ्गोंको ( ब्रह्मणा कल्पयामि ) मैं ईश्वर स्वकीय ब्रह्मरूप उत्पादन शक्तिसे उत्पन्न करता हूँ ॥ ५२ ॥

शिक्षा—जीव गर्भमें पहुँचकर शरीरकी सन्धियों और अङ्गोंको निजयोनि के अनुसार प्राप्त होता है। सम्पूर्णप्राणियोंके शरीररूपी कलाओंका निर्माण सर्वज्ञ सर्वशक्तिमान् जगदीश देव करता है ॥ ५२ ॥

पर्णो राजापिधानं चरूणामूर्जो बलं सह ओजो न आगन्।
आयुर्जीवेभ्यो विदधद्द दीर्घायुत्वाय शतशारदाय ॥ ५३ ॥

( पर्णो राजा चरूणामपिधानम् ) पर्णो राजा पर्णवतो सोमौषधिश्चरूणा

सर्वेषां चरणीयानां भक्षणीयानामपिधानमपिधीयन्त आश्रियन्ते यस्मिंस्तद्रक्षकमस्ति । यतः ( ऊर्जो बलं सह ओजो न आगन् ) ऊर्जो रसो बलं सह उत्साह ओजस्तेजश्च नोऽस्मभ्यं जीवेभ्य आगन्-आगच्छति । 'लडर्थे लेट्' ( जीवेभ्यः आयुर्विदधत् शतशारदाय दीर्घायुत्वाय ) स च सोमो जीवेभ्य आयुर्विदधाति शतशारदाय शतवार्षिकाय दीर्घजीवनाय ॥ ५३ ॥

भावार्थ—( पर्णो राजा ) पर्णवालो सोम ओषधि ( चरूणामपिधानम् ) समग्र भक्षणीय ओषधियों का आश्रयीभूत है। क्योंकि इसीसे ( ऊर्जो बलं सह ओजो न आगन् ) रस, बल, उत्साह और तेज हमारे लिये प्राप्त होता है ( जीवेभ्य आयुर्विदधत् ) जो कि जीवोंके लिये जीवन प्रदान करती है ( शतशारदाय दीर्घायुत्वाय ) सौ वर्षकी लम्बी आयु के लिये ॥ ५३ ॥

शिक्षा—सोम ओषधिके अन्दर सभी सेवनीय ओषधियोंका सार है क्योंकि सोम ओषधि सेवन करनेसे मनुष्यके शरीरमें रस, बल, उत्साह और तेज प्राप्त होते हैं जो मनुष्यको स्वास्थ्यपूर्ण शतवार्षिक आयुको प्रदान करते हैं ॥ ५३ ॥

**ऊर्जो भागो य इमं जजानाश्मान्नानामाधिपत्यं जगाम ।**
**तमर्चत विश्वमित्रा हविर्भिः स नो यमः प्रतरं जीवसे धात् ॥५४॥**

( ऊर्जो भागो योऽश्मा-इमं जजान ) ऊर्जो रसस्य भागो योऽश्मा स्थिरोऽश्मेवेमं जीवं जजानोत्पादितवान् कृतवानित्यर्थः ( अन्नानामाधिपत्यं जगाम ) सोऽन्नानामद्यमानानामाधिपत्यं स्वामित्वं जगाम प्राप्तवान् ( स यमो नः प्रतरं जीवसे धात् ) स यमो यमनशीलो नोऽस्मान् प्रतरं जीवसे जीवनाय प्रकृष्ट धारयेत् ( विश्वमित्रास्तं हविर्भिरर्चत ) अतो यूयं विश्वमित्राः सन्तस्तं हविर्भिराहुतिभिरर्चत सेवध्वम् ॥५४॥

भावार्थ—( ऊर्जो भागो योऽश्मा ) इस सोम ओषधिका जो रस भाग स्थिर या वज्रतुल्य प्रभावशाली है ( इमं जजान ) इस सेवन करने वालेको सामर्थ्यवान् बना देता है ( अन्नानामाधिपत्यं जगाम ) क्योंकि सोम सभी खाद्य ओषधियोंके आधिपत्यको प्राप्त हुआ २ है ( स यमो नः प्रतरं जीवसे धात् ) वह यमनशील हमको उत्तम जीवन के लिये धारण करता है । अतः ( विश्वमित्रास्तं हविर्भिरर्चत ) सबके हितचिन्तक बनते हुए उस सोम को आहुतियोंसे यज्ञमें उपयुक्त करो ॥ ५४ ॥

शिक्षा—सोम ओषधि का रस वज्रतुल्य प्रभावशाली है। जहां वह प्राप्त करनेसे उत्कृष्टजीवन प्रदान करता है वहां इसकी आहुतियां यज्ञमें देनेसे सर्वहित सिद्ध होता है ॥ ५४ ॥

**यथा यमाय हर्म्यमवपन् पञ्च मानवाः ।**
**एवा वपामि हर्म्यं यथा मे भूरयोसत ॥५५॥**

( यथा पञ्च मानवा यमाय हर्म्यमवपन् ) यथा पञ्च मानवाः पञ्चजना ब्राह्मणक्षत्रियविट्शूद्राश्चत्वारो वर्णा निषादः पञ्चमः "पञ्चजनाः...... चत्वारो वर्णा निषादः पञ्चमः" ( निरु० ३ । ८ ) यमाय यन्तुं शीलाय जीवाय सन्तानार्थं हर्म्यं हर्तुं धारयितुं योग्यं जीवगृहं गर्भबीजं स्त्रियामवपन् वपन्ति । 'सामान्ये काले लङ्' । "हर्म्यं गृहनाम" ( नि० ३ । ४ ) ( एवा हर्म्यं वपामि ) एवमहमीश्वरो हर्म्यं तदेव जीवगृहं गर्भबीजं सृष्ट्यां वपामि ( यथा मे भूरयो असत ) यथा मे प्रजारूपा यूयं भूरयो बहवोऽसत भवत । अल्पपाठभेदेनैष मन्त्रस्तैत्तिरीयारण्यके पठ्यते—

"यथा यमाय हार्म्यमवपन्पञ्च मानवाः । एवं वपामि हार्म्यं यथाऽसाम जीवलोके भूरयः" पूर्वञ्चैतस्मात्—

"प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते सुवः । इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसाऽवति" ( तै० आ० ६ । ६ । २ ।

अत्र प्रकरणे वृष्टिद्वारेण काचिदुत्पत्तिविद्या लक्ष्यते तद्वच्चास्माभिर्व्याख्यातम् ॥ ५५ ॥

भाषार्थ—( यथा पञ्च मानवाः ) जिस प्रकार ब्राह्मण, क्षत्रिय, वैश्य, शूद्र और निषाद पांचों ( यमाय हर्म्यमवपन् ) शरीर का नियन्त्रण करने वाले जीव के लिये यानि सन्तानके लिये गर्भ बीजको स्त्रीके अन्दर बोते हैं ( एवा हर्म्यं वपामि ) इसी प्रकार मैं ईश्वर उक्त गर्भ बीजको सृष्टिके अन्दर बोता हूँ ( यथा मे भूरयोऽसत ) जिससे तुम जीवरूप मेरी प्रजायें बहुत हो सको ॥ ५५ ॥

शिक्षा—जिस प्रकार मनुष्योंकी ओरसे शरीर उत्पत्तिके लिये स्त्रियोंमें शरीरोंका बीजारोपण किया जाता है। एवं सृष्टिके अन्दर नाना प्रकार की प्रजाकी उत्पत्तिका बीजरोपण पृथक् २ ईश्वर करता है ॥ ५५ ॥

**इदं हिरण्यं बिभृहि यत् ते पिताबिभः पुरा ।**
**स्वर्गं यतः पितुर्हस्तं निर्मृड्ढि दक्षिणम् ॥ ५६ ॥**

( इदं स्वर्गं हिरण्यं बिभृहि ) इदं स्वर्गं सुखप्रापकं हिरण्यं पूर्वोक्तं हर्म्यं जीवगृहं गर्भबीजं रेतो वा शुक्रं वा बिभृहि धारय "रेतो हिरण्यम्" (तै० ३ । ८ । २।४) "शुक्रं हिरण्यम्" ( तै० १ । ७ । ६ । ३ ) ( यत्ते पिता पुराऽबिभः ) यद्रेतस्ते पिता

जनकः पूरा पूर्वमबिभो निजशरीरे धारितवान् ( यतः पितुर्दक्षिणं हस्तं निमृड्ढि ) जीव ! अतस्त्वमेवं जन्म गृहीत्वा पितुर्जनकस्य दक्षिणं हस्तं संसारकृत्यसम्पादनाय तद्वंशपरम्पराचालनाय निमृड्ढि स्वलङ्कुरु शोभस्व । 'मृजू शौचालङ्करणयोः' ॥५६॥

भाषार्थ—( इदं स्वर्ग हिरण्यम् ) इस सुखहेतु गर्भबीज शुक्रको (बिभृहि) हे जीव ! तू धारण कर ( यत्ते पिता ) जिसको तेरे जनक पिता ने ( पुराऽबिभः ) प्रथम निज शरीरमें धारण किया था ( पितुर्दक्षिणं हस्तम ) हे जीव ! तू इस प्रकार जन्मधारण करके स्वजनक पिताके दक्षिण हाथको संसारकृत्यसम्पादनार्थ या वंशपरम्परा चलानेके लिये ( निमृड्ढि ) शोभायमान कर ॥ ५६ ॥

शिक्षा—जीव अपने कर्मफल भोगनेके लिये मनुष्य शरीरमें गर्भको प्राप्त होता है, जिस गर्भका मूलस्वरूप शुक्र पिताके शरीरमें स्थिर होता है अत एव सन्तान निजपिताके कर्तव्यभारको हाथमें लेकर अपनी वंशपरम्पराको अलङ्कृत करता है । ॥ ५६ ॥

**ये च जीवा ये च मृता ये जाता ये च यज्ञियाः ।**
**तेभ्यो घृतस्य कुल्यैतु मधुधारा व्युदन्ती ॥ ५७ ॥**

( ये जीवा ये च मृता ये च जाता ये च यज्ञियाः ) ये जीवा मृता मृत्युंगता ये च जाता विद्यमाना ये च यज्ञिया गर्भाधानयज्ञार्हा गर्भाधानान्तर्गता जनिष्यमाणा एवं कालत्रये वर्तमानाः सर्वेऽपि ये जीवाः सन्ति ( तेभ्यो मधुधारा व्युन्दती घृतस्य कुल्यैतु ) तेभ्यो जीवेभ्यो घृतस्य कुल्या जलवृष्टिः "घृतमुदकनाम" (नि० १।१२) मधुधारा प्राणसम्पादिका "प्राणो वै मधुः" (शत० १४ । १ । ३ । १० ) व्युदन्ती पृथिवीमार्द्रां कुर्वती सत्येतु गच्छतु ॥ ५७ ॥

भाषार्थ—( ये जीवा ये च मृताः ) जीवोंमें जो मृत्युको प्राप्त हो गए हैं (ये च जाताः ) और जो विद्यमान हैं ( ये च यज्ञियाः ) तथा जो गर्भाधानान्तर्गत अर्थात् उत्पन्न होने वाले हैं । इस प्रकार तीनों कालोंमें वर्तमान जितने भी जीव हैं ( तेभ्यो घृतस्य कुल्या ) उनके लिये जलवृष्टि ( मधुधारा ) प्राण सम्पादन करने वाली ( व्युन्दती ) पृथिवीको गीला करती हुई ( एतु ) प्राप्त होती है ॥ ५७ ॥

शिक्षा—मेघवृष्टि मृतजीवों को पुनर्जन्म देने, विद्यमान जीवोंको जीवित रखने, गर्भगत उत्पन्न होनेवाले जीवोंको प्राणशक्ति प्रदान करनेके लिये पृथिवी पर प्राप्त होती है ॥ ५७ ॥

वृषा मतीनां पवते विचक्षणः सूरो अह्नां प्रतरीतोषसां दिवः ।
प्राणः सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्दिमाविशन्मनीषया ॥५८॥

( मतीनां वृषा विचक्षणः पवते ) अस्मिन् शरीरे मतीनां मननक्रियाणां नेत्रादीन्द्रियवृत्तीनां च वृषा वर्षितृरूपं सञ्चारनिमित्तं मनः । "वृषा हि मनः" (श० १ । ४ । ४ । ३) विचक्षणो विविधतया द्रष्टृ सत् पवते गच्छति प्राप्नोति "पवते गतिकर्मा" (नि० २ । १४) ( दिव उषसामह्नां प्रतरिता सूरः ) 'अत्र लुप्तोपमाऽलङ्कारः' यथा दिवो रश्मिमण्डलादन्तरिक्षादुषसामह्नां दिवसानां च प्रतरिता प्रतारकः सूरः सूर्य्योऽस्ति । तथा ( प्राण इन्द्रस्य हार्दिमाविशन् मनीषया सिन्धूनां कलशानचिक्रदत् ) प्राणः प्राणवायुरिन्द्रस्य जीवात्मनो हार्दिं हृत्कमलमाविशन्-अन्तः स्थितः सन् । 'हृदय-शब्दाच्छान्दस इञ् ताद्धितः' मनीषया हृच्छक्त्या सह सिन्धूनां स्यन्दमानानां रक्तवाहिनीनां नदीरूपाणां नाडीनां कलशान् रक्ताशयानचिक्रदत् पुनः पुनः कम्पयति 'क्रद वैक्लव्ये वैकल्ये चेत्यन्ये भ्वादिः' "तद्यदेतैरिदं सर्वं सितं ( बद्धम् ) तस्मात्सिन्धवः" ( जै० उ० १ । २६ । ६ ) "प्राणो वै सिन्धुश्छन्दः" (श० ८।२।२।४) ॥५८॥

भाषार्थ—( मतीनां वृषा ) मननक्रियाओं नेत्रादि-इन्द्रियवृत्तियों का सञ्चार निमित्त मन ( विचक्षणः पवते ) विविध रूपसे उनका द्रष्टा प्राप्त होता है ( दिव उषसामह्नां प्रतरिता सूरः ) जैसे रश्मि-मण्डल से दिनां का प्रेरक सूर्य है । तथा ( प्राण इन्द्रस्य हार्दिमाविशन् ) प्राणवायु जीवात्मा के हृदयकमल में स्थित होकर ( मनीषया सिन्धूनाम् ) हृदय की शक्तिसे स्यन्दमान रक्तवाहिनी नाड़ियों के ( कलशानचिक्रदत् ) रक्ताशयोंको बारम्बार कम्पाता है ॥ ५८ ॥

शिक्षा—सारी मनन क्रियाओं और इन्द्रिय वृत्तियों का वहनकर्ता और आधार मन है । जिस प्रकार सूर्य अपनी किरणोंसे दिनके प्रकाशका निमित्त या प्रेरक है एवं प्राण जीवात्माके हृदयमें प्रवेश करके सभी रक्तवाहिनियोंके व्यापार-प्रकाशनका निमित्त है ॥ ५८ ॥

त्वेषस्ते धूम ऊर्णोतु दिवि षंछुक्र आततः ।
सूरो नहि द्युता त्वं कृपा पावक रोचसे ॥ ५९ ॥

( शुक्रस्ते त्वेषो धूमः सन दिव्याततः, ऊर्णोतु ) हे जीव ! शुक्रः शुक्रम् । 'लिङ्गव्यत्ययः' । तव त्वेषो धूमो देदीप्यमानोऽर्चिरिव सद् दिवि मस्तिष्के स्थितं तत्र ते शरीरमृर्णोतु-आच्छादयतु ( सूरो न द्युता त्वं पावक कृपा रोचसे ) सूरो न द्युता

सूर्यो यथा दीप्त्या तथा त्वं पावक हे स्वभावतः शुद्धस्वरूप जीव ! कृपा निजसामर्थ्येन । 'कृपू सामर्थ्ये' । रोचसे प्रतिभासि ॥ ५६ ॥

भाषार्थ—( शुक्रस्ते त्वेषो धूमः ) हे जीव ! तेरा शुक्र अर्चिके समान दीप्त होता हुआ ( दिव्यातत ऊर्णोतु ) मस्तिष्कमें स्थित हुआ सारे शरीरको व्याप्त होता है ( सूरो न द्युता ) जिस प्रकार सूर्य अपनी दीप्तिसे वर्तमान है वैसे ( त्वं पावक कृपा रोचसे ) स्वरूपसे शुद्ध हुआ तू भी निज सामर्थ्यसे प्रकाशमान है ॥५६॥

शिक्षा—मनुष्यका शुक्र तेजस्वी होकर मस्तिष्कमें स्थिर होता है जोकि सम्पूर्ण शरीरमें व्याप जाता है इस प्रकार शुक्ररूपी सामर्थ्यसे ब्रह्मचारी मनुष्य सूर्य की भांति तेजस्वी बनता है ॥ ५६ ॥

**प्र वा एतीन्दुरिन्द्रस्य निष्कृतिं सखा सख्युर्न प्र मिनाति संगिरः ।**
**मर्य इव योषाः समर्षसे सोमः कलशे शतयामना पथा ॥ ६० ॥**

( इन्द्रस्य निष्कृतिं वै-इन्दुः प्रैति ) इन्द्रस्य जीवस्य निष्कृतिं वै प्रतिष्ठापनं प्रति इन्दुर्जीवनोदकं रक्तं प्रैति प्रकर्षेण गच्छति । "इन्दुरुदकनाम" ( नि० १ । १२ ) ( सखा सख्युर्न प्रमिनाति सङ्गिरः ) यथा कश्चन सखा निजसख्युः सङ्गिरः संवादाननुज्ञाश्च प्रमिनाति प्रमाणयति-अनुसरति वा तथा ( मर्य्य इव योषाः सोमः कलशे शतयामना पथा समर्षसे ) अथवा यथा मनुष्यो भार्य्याः समभ्येति तथा सोमो रसः रक्तमिति यावत् । कलशे हृत्कोशे वर्तमानं शतयामना शतं यामानो यातव्यस्थानानि यस्मिन् तेन पथा । समभ्येति ॥ ६० ॥

भाषार्थ—( इन्द्रस्य निष्कृतिं वै ) शरीर के अन्दर जीव की प्रतिष्ठाके लिये ( इन्दुः प्रैति ) रक्त प्रगति करता है ( सखा सख्युर्न सङ्गिरः ) जैसे कोई मित्र अपने मित्र की अनुज्ञाओं और संवादोंको ( प्रमिनाति ) प्रमाणित और स्वीकार करता है । तथा ( मर्य्य इव योषाः ) जैसे मनुष्य भार्य्याके प्रति प्राप्त होता है एवं ( सोमः कलशे ) पूर्वोक्त रक्त हृदयकोशमें वर्तमान हुआ ( शतयामना पथा समर्षसे ) असंख्य यातव्य स्थानों वाले मार्गसे सम्पूर्ण शरीरको प्राप्त होता है ॥ ६० ॥

शिक्षा—जीवात्माकी शरीरमें विद्यमानता रक्तसंचार पर निर्भर है । रक्त हृदयकोशमें वर्तमान होता हुआ अन्य सभी रक्ताशयोंको सूक्ष्म तथा असंख्य तन्तुओं वाले मार्गमें से होता हुआ सम्पूर्ण शरीरमें प्रगति करता है । एक रक्ताशय का दूसरे रक्ताशयमें रक्तसंचारका क्रम या अनुकूलता इस प्रकार वर्तमान है जैसे

एक मित्र दूसरे मित्रकी अनुज्ञाका पालन करते और संवाद एक से दूसरे तक पहुँचाते हैं। या जैसे पतिपत्नी आपस में सहमत होकर वर्तते हैं ॥ ६० ॥

अक्षन्नमीमदन्त ह्यव प्रियाँ अधूषत ।
अस्तोषत स्वभानवो विप्रा यविष्ठा ईमहे ॥ ६१ ॥

( अक्षन्नमीमदन्त हि प्रियानवाधूषतास्तोषत ) एवं सति शतयामनि पथि प्राणा अक्षन् भक्षितवन्तोऽमीमदन्तोपचितवन्तश्च प्रियानङ्गानवाधूषतावकम्पितवन्तोऽस्तोषत निजसञ्चरणशब्दैरनुष्ठितवन्तः ( स्वभानवो विप्रा यविष्ठा ईमहे ) एवं प्राणसुसञ्चारे वयं स्वभानवो निजदीप्तिमन्तश्चेतनावन्तो विप्रास्तथा यविष्ठा युवतमाः सन्त ईमहे प्रार्थयामहे । "ईमहे याच्ञाकर्मा" ( नि० ३ । १९ ) ॥ ६१ ॥

भावार्थ—( अक्षन्नमीमदन्त हि ) पूर्वोक्त शतयामन् रक्तमार्गमें शरीरके अन्दर सारे प्राण उक्त रक्तको भक्षण करते हैं और वे बढ़ते हैं। ( प्रियानवाधूषतास्तोषत ) पुनः वे अपने २ प्रिय अङ्गों को कम्पित करते और निज सञ्चरणशब्दों से उनको प्राप्त होते हैं ( स्वभानवो विप्रा यविष्ठा ईमहे ) अतः उक्त प्राणों को हम सावधान हुवे बुद्धि के साथ और विद्वान् तथा बलवान् होते हुवे शरीर में सदा स्थिर रखना चाहते हैं ॥ ६१॥

शिक्षा—रक्ताशयों में रक्त घूमता हुआ शरीरके अन्दर वर्तमान सभी प्राणों को प्राप्त होता है जिससे वे प्राण बलवान् होकर अपने २ सम्बन्ध के अङ्गों को चलाते और निज संचार शब्दों से प्राप्त होते हैं। अतः मनुष्योंको बड़ी सावधानी बुद्धिमत्ता आदि उत्तम व्यवहारोंसे उक्त प्राणोंकी सुस्थितिका ध्यान रखना चाहिए ॥ ६१ ॥

आ यात पितरः सोम्यासो गम्भीरैः पथिभिः पितृयाणैः ।
आयुरस्मभ्यं दधतः प्रजां च रायश्च पोषैरभि नः सचध्वम् ॥६२॥

( सोम्यासः पितरो गम्भीरैः पितृयाणैः पथिभिरायात ) हे सोमसम्पादिनो रससम्पादिनः पितरः प्राणा गम्भीरैः सुरक्षितैः पितृयाणैः प्राणनाडीयानैः पथिभिर्मार्गैरायात शरीरे प्राप्नुत ( अस्मभ्यमायुः प्रजां दधतः ) अस्मभ्यमायुः प्रजां प्रजननशक्तिम् । 'एकवचनत्वात्' दधतो धारयन्तः ( रायश्च पोषैर्नोऽभिषचध्वम् ) यूयं रायो धनरूपाः सन्तो हे प्राणा नोऽस्मान् पोषैः पोषणैरभिषचध्वं संसेवध्वम् ॥ ६२ ॥

भावार्थ—( सोम्यासः पितरः ) शरीरके अन्दर रस बनाने वाले प्राणो

( गम्भीरैः पितृयाणैः पथिभिरायात ) सुरक्षित प्राण नाडीरूप मार्गों से शरीरमें प्राप्त हो ( अस्मभ्यमायुः प्रजां दधतः ) हमारे लिए स्वजीवन तथा सन्तानोत्पादक-शक्तिको धारण कराते हुए ( रायश्च पोषैर्नोऽभिषचध्वम् ) तुम सुख दायक होते हुवे हमको विविध पोषणों से युक्त करो ॥ ६२ ॥

शिक्षा—शरीरके अन्दर प्राण सुरक्षित प्राणतन्तुओं द्वारा सम्पूर्ण शरीर को प्राप्त होते हैं और शरीरके अन्दर जीवनशक्ति तथा प्रजननशक्तिको स्थिर करते हुवे हर प्रकारसे पुष्ट करते हैं ॥ ६२ ॥

**परा यात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्याणैः ।**
**अधा मासि पुनरायात नो गृहान् हविरत्तुं सु प्रजसः सुवीराः ॥६३॥**

( सोम्यासः पितरो गम्भीरैः पूर्य्याणैः पथिभिः परायात ) सोमसम्पादिनो रससम्पादिनः शुद्धरक्तनिर्मातारः पितरः प्राणा गम्भीरैर्गहनैः पूर्याणैः पुरं शरीरं समग्रदेहं यान्ति यैस्तैः पथिभिर्मार्गैः प्राणतन्तुभिः परायात सर्वत्र विस्तृता भवत । पूः शरीरमत्र प्रमाणानि—"नवद्वारे पुरे देही" ( श्वेताश्वतरो० ३ । १८ ) "पुरमेकादशद्वारम्" ( कठो० ५ । १ ) "अयं पुरुषः सर्वासु पूर्षु पुरिशयः" (बृहदा० २ । ५ । १८) "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" ( प्रश्नो ४ । ३ ) ( अधा मासि पुनरायात ) अधा अनन्तरं मासि । 'मस् परिणामे ततो णिजन्तात् क्विप्' । मासयति परिणमयति रक्तं शोधयतीति तादृशि फुप्फुसाद्यङ्गे मांसपिण्डे पुनरायात पुनरागच्छत ( सुप्रजसः सुवीरा नो गृहान् हविरत्तुं पुनरायात ) सुप्रजसः सुप्रजायन्ते—इति सुप्रजसः सम्यगुत्पत्तिशक्तिमन्तः सुवीराः सुबलिष्ठाः सन्तो नो मम "अस्मदो द्वयोश्च" (अष्टा० १ । २ । ५९) गृहान् पूर्वोक्तान् कोशान् हविरन्नमत्तुं ग्रहीतुं पुनरायात वारं वारं प्राप्नुत । 'मास् शब्दो-मांसवाची सायणेनापि मतः "माः मांसानि" ( ऋ० ५ । २१ । ८ ) ॥ ६३ ॥

भाषार्थ—( सोम्यासः पितरो गम्भीरैः पूर्य्याणैः पथिभिः परायात ) शुद्ध रक्तके निर्माण करने वाले प्राणो ! शरीरके अन्दर तन्तुरूप गहन मार्गों से इस सम्पूर्ण शरीरमें फैल जाओ ( अधा मासि पुनरायात ) पश्चात् रक्तका परिणाम करने वाले फुप्फुसादि अङ्गमें फिर प्राप्त होवो (सुप्रजसः सुवीरा नो गृहान् हविरत्तुं पुनरायात) इस प्रकार अङ्गादिकोंकी उत्तम उत्पत्ति शक्ति वाले तथा सुबलिष्ठ होते हुए मेरे शारीरिक कोशोंको रसादि धातुओंके ग्रहण करनेके लिये बारम्बार प्राप्त होवो ॥६३॥

शिक्षा—रक्तका शोधन तथा निर्माण करने वाले प्राण शरीरमें वर्तमान सूक्ष्मतन्तुमार्गों से रक्तको साथ लेकर सम्पूर्ण शरीरमें भ्रमण करते हैं पुनः उक्त

रक्तका परिणाम उत्तम बनानेके साधनरूप फुफ्फुस जैसे अङ्गमें प्राप्त होते हैं। वहां रक्त शुद्धि होती है जिससे प्राण बलवान हो अङ्गोंकी निर्माण शक्तिको प्राप्त करके पुनः रक्त बननेके सामग्रीरूप रसको साथ लेकर गतिचक्र चलाते हैं ॥ ६३ ॥

यद्व वो अग्निरजहादेकमङ्गं पितृलोकं गमयँ जातवेदाः ।
तद्व व एतत् पुनरा ध्यायायामि साङ्गाः स्वर्गे पितरो मादयध्वम् ॥६४॥

(यदग्निर्वः पितृलोकं गमयन्नेकमङ्गमजहात ) हे प्राणाः ! यद्यतोऽग्निर्वैश्वानरः शरीरचालकोग्निः पितृलोकं प्राणस्थानं देहं गमयन् युष्मान् प्रापयन्नेकमङ्गमेकमप्यङ्गमजहात् त्यजेत् पूरणं न कुर्यात ( तद्व एतत् पुनराप्यायायामि ) तद्वो युष्माकमेतदङ्गं पुनराप्यायायामि पुनः पूरयामि ( पितरः साङ्गाः स्वर्गे मादयध्वम् ) पितरो हे प्राणाः ! साङ्गाः सर्वैरङ्गैः सह सङ्गता यूयं स्वर्गेऽस्मिन् सुखहेतुके मे शरीरे मादयध्वं मां प्रसादयत ॥ ६४ ॥

भावार्थ—( यदग्निर्वः पितृलोकं गमयन् ) हे प्राणो ! जिससे कि वैश्वानर अग्नि देहके प्रति तुमको पहुँचाती हुई ( एकमङ्गमजहात् ) एक भी अङ्गको छोड़ देवे तो ( तद्व एतत् पुनराप्यायायामि ) मैं जीवात्मा अपनी इच्छाशक्तिसे तुम्हारे उस अङ्गको पूर्ण कर दूंगा ( पितरः साङ्गाः स्वर्गे मादयध्वम् ) अतः हे प्राणो ! तुम सभी अङ्गोंके साथ सङ्गत हुए सुख निमित्त शरीरमें मुझको स्वस्थ रक्खो ॥ ६४ ॥

शिक्षा—शरीरकी वैश्वानर अग्नि प्राणोंको अङ्ग २ में पहुँचाती है, कदाचित् किसी अङ्गमें प्राणक्रियाकी न्यूनतासे अस्वस्थता प्रतीत हो तो फिर उसको चिकित्सा आदिसे स्वस्थ बनाना चाहिये, मनुष्य तभी तक स्वस्थ कुशल और प्रसन्न रह सकते हैं जब तक प्राण अङ्ग २ में विद्यमान होकर काम करते रहते हैं ॥६४॥

अभूद्द दूतः प्रहितो जातवेदाः सायं न्यह्न उपवन्द्यो नृभिः ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥६५॥

( जातवेदाः प्रहितो दूतोऽभूत् ) जातवेदा वैश्वानरो जाठराग्निः प्रहितः शरीरे प्रधृतः सन् दूतो दूत इवान्नरसादीनां प्रेषकोऽभूत् ( सायं न्यह्ने नृभिः स्वधयोपवन्द्यः ) स जाठराग्निः सायं सायन्तने न्यह्नेऽह्नः प्रकाशीभावादनन्तरमुपमध्याह्ने नृभिर्जनैः स्वधयाऽन्नेनान्नभोजनेनान्नखादनेनोपवन्द्यः सेव्यः। उक्तञ्चान्यत्रापि धर्मग्रन्थे "कालयोर्भोजनम्" ( आपस्तम्बीयधर्म० २ । १ । १ । २ ) "स्वधान्ननाम" ( नि० २ । ७ ( देव प्रयता हवींषि त्वमद्धि ) हे अग्निदेव ! प्रयतानि दत्तानि हवींषि-अत्तुं भक्षयितुं योग्यानि वस्तूनि । 'हु धातुरत्र अदनार्थः' अद्धि भक्षय। पुनः ( पितृभ्यः

के लिए हवनकुण्डमें मंत्रों द्वारा होम करके यज्ञ ज्वालाओंको विधिपूर्वक प्रकट करना है। विवरणके लिये देखो सूक्त० अथ० १८। ३। २१ ( ( पृष्ठ १५६ )

**शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः।**
**शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥**
**ऋ० ७। ३५। १२, अथ० १९। ११। ११**

( सत्यस्य पतयो नः शं भवन्तु ) सत्यभाषणादिव्यवहारस्य पतयः पालका नोऽस्मभ्यं शं सुखकारका भवन्तु (अर्वन्तो नो गावः शमु सन्तु) उत्तमा अश्वा गावश्च नोऽस्मभ्यं शं सुखहेतवः सन्तु ( सुकृतः सुहस्ता ऋभवो नः शं भवन्तु ) धर्मात्मानः सुहस्ताः शोभनेषु कर्मसु हस्ता येषां त ऋभवो मेधाविनोऽस्मभ्यं सुखबोधका भवन्तु ( पितरो हवेषु नः शं भवन्तु ) पितरो जनकादयो हवेषु हवनादिसत्कर्मसु नोऽस्मभ्यं शं सुखसाधका भवन्तु। इति दयानन्दः ॥

भाषार्थ—( सत्यस्य पतयो नः शं भवन्तु ) सत्यभाषणादि व्यवहारके पालक हमारे लिये सुखकारक हों ( अर्वन्तो नो गावः शमु सन्तु ) उत्तम घोड़े और गौ हमारे लिए सुखके हेतु हों ( सुकृतः सुहस्ता ऋभवो नः शं भवन्तु ) धर्मात्मा शुभकर्ममें हाथ जिनका है ऐसे मेधावी हमको सुख का ज्ञान कराने वाले हों ( पितरो हवेषु नः शं भवन्तु ) जनकादि हवनादि सत्कर्मोंमें हमारे लिये सुखसाधक हों ॥

शिक्षा—मनुष्योंको सदा सत्यवादी पुण्यात्मा विद्वानों तथा अपने पूर्वज माता पिता आदिकों की सेवा और सत्सङ्ग करके सुखलाभ उठाना चाहिये ॥

इस मन्त्रमें पितरका अर्थ पूर्वज जनकादि है। इनका कार्य सत्कर्मों में सहायता और प्रेरणा करना है ॥

**पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः। पुनन्तु प्रपितामहाः। पवित्रेण शतायुषा। पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः। पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ यजु० १९। ३७**

( सोम्यासः पितरः पवित्रेण शतायुषा मा पुनन्तु ) सोमवच्छान्ताः पितरो जनकादयः पवित्रेण शतायुषा शतायुरन्तर्गतेन निजानुभवेन मां पुनन्तु ( पितामहा मा पुनन्तु ) पितामहाश्च सोम्याः शतायुरन्तर्गतेन निजानुभवेन मां पुनन्तु (प्रपितामहाः पुनन्तु ) प्रपितामहाश्च सोम्याः शतायुरन्तर्गतेन निजानुभवेन मां पुनन्तु ( पितामहाः पुनन्तु प्रपितामहाः पुनन्तु ) त एवमर्थं पुनन्तु यत् ( पवित्रेण शतायुषा विश्व-

मायुर्व्यश्नवै ) पवित्रेण रवरथेन शतायुषा भोगेनाहं विश्वमायुर्व्यश्नवै प्राप्नुयाम् । तथा च दयानन्दः ॥

भाषार्थ—( सोम्यासः पितरः पवित्रेण शतायुषा मा पुनन्तु ) सोमके समान शान्तस्वभाव जनकादि अपने पवित्र सौ वर्षान्तर्गतके अनुभवसे मुझे पवित्र करें। ( पितामहा मा पुनन्तु ) और पितामह भी अपने सौ वर्षके अनुभवसे मुझे पवित्र करें ( प्रपितामहा मा पुनन्तु ) प्रपितामह भी अपने सौ वर्षके अनुभवसे मुझे पवित्र करें ( पितामहाः पुनन्तु प्रपितामहाः पुनन्तु ) वे इसलिए मुझे पवित्र करें कि (पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै) पवित्र सौ वर्षके भोगसे सारी आयुको प्राप्त हो सकूं ॥

शिक्षा—पिता, पितामह, प्रपितामह, पूज्य महानुभावोंसे इनके सौ वर्षकी आयुका अनुभव सीखना चाहिए। जिससे स्वयं सौ वर्षकी पूर्णायुको सुखसे भोग सकें ॥

इस मंत्रमें पितर शब्दका अर्थ माता पिता आदि पालक जन हैं। और इनका कार्य सन्तानके प्रति अपने जोवनके उपयोगी अनुभवोंका उपदेश देना है।

**द्विधा सूनवोऽसुरं स्वर्विदमास्थापयन्त तृतीयेन कर्मणा ।**
**स्वां प्रजां पितरः पित्र्यं सह आवरेष्वदधुस्तन्तुमाततम् ॥**

ऋ० १० । ५६ । ६

( सूनवः स्वर्विदमसुरं तृतीयेन कर्मणा द्विधाऽऽस्थापयन्त ) सूनवः पुत्रा रश्मयः स्वर्विदं द्युस्थानमसुरं प्राणप्रदमादित्यं तृतीयेन कर्मणा, प्रकाशनं प्रथमं कर्म दहनं द्वितीयमुत्पादनं नशानं च तृतीयं कर्म। "जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्" ( छान्दो० ५ । १० । ८ ) तेनोत्पादनाशरूपेण कर्मणा सूर्यस्य रश्मयस्तं द्विधोदयास्तभावमास्थापयन्त दर्शितवन्तः। यथा सूर्यस्य उदयास्तभावौ भवतस्तथा रश्मिषूदयास्तभावाभ्यामहोरात्रौ सन्निधापयति सूर्य्यः । तच्चेदम् ( पितरः स्वां प्रजां पित्र्यमाततं तन्तुं सहोऽवरेषु-आदधुः ) पितरो रश्मयः पितरः सन्तो वा यथा स्वां प्रजां प्रति पित्र्यं पैतृकं निजपितृकृत्यं वा यदाततमितस्ततो गतं तन्तुमग्रे विस्तारयितुं सहो बलमवरेषु सन्तानेषु पदार्थेषु वाऽऽदधुः स्थापितवन्तः ॥

भाषार्थ—( सूनवः स्वर्विदमसुरं तृतीयेन कर्मणा द्विधाऽऽस्थापयन्त ) सूर्यरश्मियां द्युस्थानमें प्राप्त आदित्यको अपने उत्पादन और नाशरूप तृतीयकर्मसे उदय और अस्त भावसे दिखलाते हैं। क्योंकि प्रकाश करना प्रथम कर्म है दहन करना दूसरा कर्म और उत्पादन तथा नाश तृतीय कर्म है। जैसे ही सूर्यके उदय और अस्त

भाव होते हैं वैसे ही रश्मियोंके अन्दर उदय और अस्त भावसे सूर्य दिनरातकी व्यवस्था करता है। और वह यह ( पितरः स्वां प्रजां पिष्यमाततं तन्तुं सह्योऽवरेष्वादधुः ) जिस प्रकार माता पितादि कुटुम्बी जन अपनी सन्तानके प्रति पैतृक धन वा निजकृत्यको पूर्ण करनेके लिए आगे विस्तार करनेके लिए सन्तानोंमें बल धारण कराते हैं वैसे ही सूर्यरश्मियां प्रकाशको धारण करती हैं॥

शिक्षा—सूर्यरश्मियां सूर्यके उदयास्तके साथ ही उदय और अस्तको प्राप्त होती हुई दिनरातके स्वरूपको प्रकट करती हैं और सूर्य उन रश्मियोंके अन्दर अपना प्रकाश इस प्रकार स्थिर करता है जैसे कि मातापितादि कुटुम्बीजन अपनी सन्तानों के अन्दर निज धनको स्थिर करते हैं॥

इस मन्त्रमें माता पिता आदि कुटुम्बी जनोंके लिए पितर शब्द उपमा दर्शाते हुए आया है और इनका कार्य निजधनका सन्तानोंके प्रति अर्पण करना है॥

**अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा।**
**रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन॥**

ऋ० १। १०६। ३

( सुप्रवाचनाः पितरो नोऽवन्तु ) सुष्ठु प्रवाचनमध्यापनं च येषां ते पितरो ज्ञानिजना अवन्तु निजशरणे रक्षन्तु ( उत देवपुत्रे ऋतावृधा देवी ) उतापि देवाः सर्वे पुत्रा ययोस्त ऋतेन प्रकृत्याख्येन कारणपदार्थेन वर्द्धिते विस्तृते दानस्वभावेऽवतामस्मान् रक्षताम् ( रथं न दुर्गात् ) यथा सारथी रथं दुर्गाद् विमार्गाद्रक्षति तद्वत् ( सुदानवो वसो न अंहसो निष्पिपर्तन ) हे शुद्धदानवन्तो विद्यादिशुभगुणेषु वसन्ति ते यूयमस्मानहंसो विश्वस्मात्पापान्निष्पिपर्तन निरन्तरं पालयत। इति दयानन्दः॥

भावार्थ—( सुप्रवाचनाः पितरो नोऽवन्तु ) उत्तम पढ़ाना और उपदेश देना जिनका है ऐसे ज्ञानी जन हमको निजशरणमें रखें ( उत देवपुत्रे ऋतावृधा देवी ) सब दिव्यपदार्थ जिनके पुत्र तुल्य हैं ऐसे वे प्रकृतिरूप कारण से बढ़ने बढ़ाने वाले दान स्वभावके द्यावा-पृथिवी हमारी रक्षा करें ( रथं न दुर्गात् ) जैसे सारथि रथको उलटे मार्ग से बचाता है एवं ( सुदानवो वसो नो अहंसो निष्पिपर्तन ) हे शुद्ध दानवाले विद्यादि शुभ गुणोंमें बसने वाले महानुभावो हमको सब प्रकारके पापोंसे सदा बचाओ।

शिक्षा—विश्वके अन्दर जिस प्रकार द्यावापृथिवी हमें वृष्टि और ओषधि

प्रदान करके पालन करते हैं एवं अच्छे उपदेशक और शिक्षक सदा सब प्रकारके पाप से बचाकर हमारी रक्षा करते हैं ॥

इस मंत्रमें शिक्षक और उपदेशकरूप ज्ञानी जनके अर्थमें पितर शब्द है और इनका कार्य अध्यापन तथा उपदेश द्वारा मनुष्यको उलटे मार्गसे बचाना है ॥

**अस्माकमत्र पितरो मनुष्या अभिप्रसेदु ऋतमा शुषाणाः ।**
**अश्मवज्राः सुदुघा वव्रे अन्तरुदुस्रा आजन्नुषसो हुवानाः ॥**

ऋ० ४ । १ । १३

( अस्माकमत्र मनुष्याः पितर ऋतमाशुषाणा अभिप्रसेदुः ) अस्माकमत्र सभायां मनुष्या मेधाविनः पितरो ज्ञानिजनाः "मनुष्य इति मेधाविनाम" (नि० ३ । १५) ऋतं ज्ञानं ज्ञानयज्ञं वाऽऽशुषाणा व्याप्नुवन्तोऽभिप्रसेदुरभिप्रसीदन्ति कथमिव । यत् ( उषसोऽन्तर्हुवाना अश्मव्रजाः सुदुघा उस्रा उदाजन् ) उषसोऽन्तर्हुवानाः सूर्यप्रकाशस्य मध्ये बलं गृह्णाना अश्मव्रजा मेघमण्डलं प्रति गन्तारः सुदुघा वृष्टिजलस्य दोग्धार उस्राः सूर्यरश्मय उदाजन्नुद्भवन्त्युद्गच्छन्ति तान् तथा-भूतान् पूर्वोक्तान् पितॄन् ( वव्रे ) वृणे । तथा च दयानन्दः ॥

भावार्थ—(अस्माकमत्र मनुष्याः पितर ऋतमाशुषाणा अभिप्रसेदुः) हमारी सभामें मेधावी ज्ञानीजन ज्ञानयज्ञको व्याप्त होते हुए इस प्रकार प्रसन्न होते हैं कि जैसे ( उषसोऽन्तर्हुवाना अश्मव्रजाः सुदुघा उस्रा उदाजन् ) सूर्यप्रकाशके अन्दर बल को प्राप्त होती हुई वृष्टिकारक रश्मियां प्रकट होती हैं । ( वव्रे ) उन ज्ञानी जनों को मैं स्वीकार करता हूँ ॥

शिक्षा—जिस प्रकार मेघमण्डलकी तरफ जाने वाली सूर्यरश्मियां जल-वृष्टि करके प्राणियोंका उपकार करती हैं एवं मेधावी विद्वान्जन भी सभा आदिको प्राप्त होकर विद्याप्रचारसे लोकोपकार करके प्रसन्न होते हैं । उनको सेवा और सत्संग करना चाहिये ॥

इस मंत्रमें पितर शब्द ज्ञानी पुरुषोंके अर्थमें आया है और उनका कार्य सभा स्थानोंमें जाकर विद्याप्रचार करना है ॥

**स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावीत् ।**
**येना नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमुष्णन् ॥**

ऋ० ९ । ९७ । ३९

( स वर्धिता वर्धनो मीढ्वान् पूयमानः सोमः ) स वर्धिता वर्धयिता वर्धनः स्वयं वर्धनशीलो मीढ्वान् स्वरसेन सेचनकर्ता पूयमानो निःसार्यमाणः सोमः सोमरसः ( ज्योतिषा नोऽभ्यावीत् ) नोऽस्मान् ज्यतिषा यज्ञाग्निज्वालयाऽभ्यावी दभिप्राप्तः ( येना नः पूर्वे पदज्ञाः स्वर्विदः पितरः गा अभ्यद्रिमुष्णन् ) येन हुतेन सोमेन नोऽस्माकं पूर्वे पदज्ञा मर्मज्ञा विद्यास्थानज्ञाः स्वर्विदः स्वरादित्यस्य वेत्तार आदित्यविज्ञानवन्तः पितरः पालकजना विद्वांसो गा अभि रश्मीनभिलक्ष्य "सर्वेपि रश्मयो गाव उच्यन्ते" ( नि० २ । ७ ) अद्रिं मेघमुष्णन् दग्धवन्त उष्णीकृत्य नीचै-र्निपातितवन्तः ॥

भाषार्थ—( स वर्धिता वर्धनो मीढ्वान् पूयमानः सोमः ) वह बढ़ाने वाला और स्वयं वृद्धिशील स्वरससे सींचने वाला निकलता हुआ सोमरस ( ज्योतिषा नोऽभ्यावीत् ) यज्ञज्वालासे हमको प्राप्त होता है ( येना नः पूर्वे पदज्ञाः स्वर्विदः पितरः गा अभि, अद्रिमुष्णन् ) जिस होम किये सोमके द्वारा हमारे मर्मज्ञ सूर्यविज्ञान के जानने वाले पूर्वज पालक विद्वान् सूर्यकिरणोंको लक्ष्य करके मेघको गिरा देते थे ॥

शिक्षा—सोम याग करनेसे मेघवृष्टि होती है ॥

इस मन्त्रमें पालक विद्वान् जनोंके लिए पितर शब्द आया है और इनका कार्य वैज्ञानिक ढङ्गसे सोमयाग द्वारा वृष्टि करनेका है ॥

**त इद्देवानां सधमादा आसन्नृतावानः कवयः पूर्व्यासः ।**

**गूढ्हं ज्योतिः पितरो अन्वविन्दन्त्सत्यमन्त्रा अजनयन्नुषासम् ॥**

ऋ० ७ । ७६ । ४

( पूर्व्यासः कवय ऋतावानः पितरो देवानां सधमादा आसन् ) ये हि पूर्व्यासः प्राचीनाः कवयो बुद्धिमन्त ऋतं ज्ञानमनुतिष्ठन्तः पितरः पालकजना देवानां ब्रह्मविदां सधमादाः सहमादो मदनं ज्ञानं गतिर्वा येषां त एवं सधमादाः सहयोगिन आसन् ( त इत् सत्यमन्त्रा गूढं ज्योतिरन्वविन्दन्—उषासमजनयन् ) ते हि पितरः सत्यमन्त्राः सत्यज्ञानवन्तः सन्तो गूढं ज्योतिरन्तर्हितं ब्रह्मज्योतिरन्वविन्दन् प्राप्तवन्तोऽत एवोषासमात्मदीप्तिमजनयन् प्रकाशितवन्तः ।

भाषार्थ—( पूर्व्यासः कवय ऋतवानः पितरो देवानां सधमामादा आसन् ) जोकि प्राचीन बुद्धिमान ज्ञानका अनुष्ठान करते हुए पालकजन ब्रह्मवेत्ताओंके सहयोगी हुए हैं ( त इत् सत्यमन्त्रा गूढं ज्योतिरन्वविन्दन्नुषासमजनयन् ) वे ही

सत्य ज्ञान वाले होकर अन्तर्हित ब्रह्मरूप ज्योतिको प्राप्त हुए हैं अत एव उन्होंने अपनी आत्मदीप्तिको प्रकाशित किया है ॥

शिक्षा—विद्याप्रेमी बुद्धिमान् सर्वहितैषी विद्वान् जन ही अन्तर्यामी परमात्मदेवका साक्षात्कार करके अपनी आत्मशक्तिका विकास करते हैं ॥

इस मन्त्रमें पितर शब्द सर्वहितैषी, ज्ञानी पालक जनोंके अर्थमें आया है और इनका कार्य विद्याध्यन और ब्रह्मसङ्गतिसे आत्मविकास करना है ॥

**अरायान् ब्रूमो रक्षांसि सर्पान् पुण्यजनान् पितॄन् ।**
**मृत्यूनेकशतं ब्रूमस्ते नो मुञ्चन्त्वंहसः ॥ अथ० ११ । ६ । १६ ॥**

( अरायान् रक्षांसि सर्पान् पुण्यजनान् पितॄनेकशतं मृत्यून् ब्रूमः ) अरायान् वञ्चकान् साहसिकान् रक्षांसि रोगोत्पादककृमीन् सर्पान् विषमयजन्तून् पुण्यजनान् पितॄन् कुशलान् सैनिकानेकशतं मृत्यून् मारणोपायान् ब्रूमः ( ते नोऽहसो मुञ्चन्तु ) ते नोऽस्मानंहसः पापान्मुञ्चन्तु पृथक्कुर्वन्तु ॥

भाषार्थ—( अरायान् ) वञ्चकों ( रक्षांसि ) रोगोत्पादक कृमियों (सर्पान् ) विषमयजन्तुओं ( पुण्य जनान् पितॄन् ) कुशल सैनिकजनों ( एकशतं मृत्यून् ) एक सो एक मारणोपायोंको ( ब्रूमः ) कहते हैं ( ते नोऽहंसो मुञ्चन्तु ) वे ये हमें पापसे पृथक् करें ॥

शिक्षा—संसारमें मनुष्योंको जो लुटेरों-डाकुओं, रोगोत्पादक कीड़ों, विषमयजन्तुओं, युद्धमें कुशल सैनिकों और १०१ विषादि द्वारा मृत्यु उपायोंसे जो कष्ट मिलते हैं वे सब पापके फल हैं ॥

इस मन्त्रमें शत्रुओंका हनन करने वाले सैनिकोंके अर्थमें पितर शब्द आया है। इनका कार्य पाप करने वालेको परास्त करने या मृत्युदण्ड देकर पापका फल भुगानेका है ॥

**गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् ।**
**दृष्टानदृष्टानिष्णामि यथा सेनाममूं हनन् ॥ अथ० ८ । ८ । १५ ॥**

( गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् दृष्टानदृष्टानिष्णामि ) युद्धप्रकरणे पठितो मन्त्र एष तस्मादत्र गन्धर्वादिभिर्युद्धोपकरणैर्भवितव्यम् । अत एवात्र पितृशब्दो न मृतजनार्थः । अर्थवस्तुत्वञ्चैवं यत्-उपद्रवकारिणो गन्धवतो वातान् तथैवोपद्रवकारिणस्तेजोरूपवतः कैश्चित्प्रकारैरुत्पादितान् सूर्यरश्मीन् "प्रजा-

प्रतिरूपद्रवं गन्धर्वाप्सरोभ्यः प्रायच्छत्" ( जै० उ० १ । १२ । १ ) "अथो गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति" ( श० ६ । ४ । १ । ४ ) "वातो गन्धर्वः ( श० ६ । ४ । १ । ४० ) "तस्य सूर्यस्य मरीचयोऽप्सरसः" ( श० ६ । ४ । १ । ८ ) सर्पान् प्रसिद्धान् सर्पणशीलान् विषमयान् जन्तून् देवानग्न्यादीन् पुण्यजनान् कुशलान् पितॄन् सैनिकान् । 'मुख्यशब्दार्थसमन्वये द्रष्टव्या पितृसंख्या ११' एवं दृष्टान् प्रसिद्धान् शस्त्रादियुक्तान् अदृष्टान् गुप्तानस्त्रादियुक्तान् इष्णाम्यहं राजा युद्धक्षेत्रे प्रेरयामि ( यथाऽमूं सेनां हनन् ) एवं प्रेरयामि यथामूं सेनां विपक्षां शत्रुसेनां हनन् हन्यासुः । लिङर्थे लेट ॥

भाषार्थ—( गन्धर्वाप्सरसः ) विषगन्धि हवाओं और जलानेवाली सूर्यकिरणोंको ( सर्पान् ) तीव्र विषवाले जन्तुओंको ( देवान् ) अग्नि आदि युद्धोपयोगी पदार्थों को ( पुण्यजनान् पितॄन् ) कुशल सैनिक जनोंको ( दृष्टान् ) प्रसिद्ध शस्त्रादि युक्तोंको ( अदृष्टान् ) गुप्त अस्त्रादि युक्तोंको ( इष्णामि ) मैं राजा युद्ध क्षेत्रमें प्रेरित करता हूँ ( यथा अमूं सेनां हनन् ) जिससे कि शत्रुसेनाको हनन कर डालें ॥

शिक्षा—राजाको युद्धक्षेत्रमें लड़नेके लिये शत्रुसेनाका पराजय जिस प्रकार हो ऐसे विषगन्धिहवा, यन्त्र द्वारा जलादेनेवाली तीक्ष्ण सूर्यरश्मियों और विषमयजन्तुओं के योग तथा अच्छे २ वीर सैनिकोंसे काम लेना चाहिये जो कि शस्त्र और अस्त्र साधनोंसे युक्त हों ॥

इस मन्त्रमें पितरशब्द सैनिकजनोंके अर्थमें प्रयुक्त है। क्योंकि यह सङ्ग्रामप्रकरणका मन्त्र है इसमें सभी साधन सङ्ग्रामके उपयोगी हैं और ( सैनिकरूप ) पितरोंका कार्य यहां शत्रु सेना का हनन करना है ॥

**वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ।**
**गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् ।**
**सर्वांस्ताँ अर्बुदे त्वममित्रेभ्यो दृशे कुरूदारांश्च प्रदर्शय ॥**

**अथ० ११ । ९ । २४**

( वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ) युद्धोपयुक्तान् विषमयान् वनस्पतीन् फलवतो वृक्षान् वानस्पत्यान् पुष्पफलवतस्तरून् ओषधीः फलकान्तान् तरुकानुत वीरुधः प्रतानानि "फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि । ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः" ( चरक० सूत्र० १ । ७१ ) ( गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् सर्वांस्तान् ) पूर्वमन्त्रवदुपद्रवकारिणो गन्धवतो वातानुपद्रव-

कारिणस्तीदणरूपवतो दाहकरश्मीन् विषजन्तून् अग्न्यादीन् युद्धकुशलसैनिकान् सर्वान् तान् ( अर्बुदे त्वममित्रेभ्यो दृशे कुरु ) 'अर्ब हिंसायां तत औणादिक उः प्रत्ययः' । अर्बून् हिंसकान् द्यति खण्डयतीत्यर्बुदिर्वीरो राजा अर्बुदे हे वीर राजन् ! त्वममित्रेभ्यः शत्रुभ्यो दृशे व्यक्तीभावं कुरु ( उदरांश्च प्रदर्शय ) अथोदारांश्च युद्धे-उन्नतान् प्रवृत्तांश्च प्रदर्शय भावय । 'अत्र मन्त्रे वनस्पत्याद्युद्भिज्जविषजन्तुवाताग्न्यादीनां पदार्थानां कश्चिदस्त्रयोगो लक्ष्यते ।' उक्तं यथा कौटिल्यार्थशास्त्रे—"चित्रभेककौण्डिन्यककृकणपञ्चकुष्ठशतपदीचूर्णमुच्चिदिङ्गकम्बलिशतकन्देध्मकृकलासचूर्णं गृहगोलिकान्धाहिककृकणकपूतिकीटगोमारिकाचूर्णं भल्लातकावल्गुकारसयुक्तं सद्यः प्राणहरमेतेषां वा धूमः ।" कौटिल्यार्थशास्त्रे ( अ० १४६ ) ॥

भाषार्थ—( वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ) युद्धोपयोगी विषमय फलवाले वृक्ष, फूलफल वाले पौदे, फलपाकान्त ओषधि और फैलने वाली बेलोंको ( गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् सर्वांस्तान् ) पूर्वमन्त्रके अनुसार उपद्रवकारी विषगन्धि हवाओं, दाहकसूर्यरश्मियों, विषैले जन्तुओं, अग्न्यादि पदार्थों और कुशल सैनिक जनोंको इस प्रकार सभी युद्ध साधनोंको ( अर्बुदे त्वममित्रेभ्यो दृशे कुरु ) हे वीर राजा ! तू शत्रुओंके लिये तय्यार कर (उदारांश्च प्रदर्शय) और उनको युद्धमें उन्नत अर्थात् कार्यसाधक रूपमें छोड़ ॥

शिक्षा—वीर राजाको चाहिये कि युद्धविजयके लिए नाना प्रकारकी प्रभावशाली विषमयी वनस्पतियों और विषैले जन्तुओंके योग तय्यार करे तथा कुशल सैनिकों द्वारा विजय प्राप्त करे ॥

इस मन्त्रमें पूर्व मन्त्रके तुल्य सैनिक जनोंके अर्थमें पितर शब्द आया है यहां पितरों ( सैनिकों ) का कार्य शत्रुओंके साथ युद्ध करना है ॥

विशेष—इस मन्त्रमें "वानस्पत्यान्" शब्द आया है । सायण तथा स्वाध्याय मण्डलके विद्वान्ने वनस्पतिओंसे उत्पन्न पदार्थों का अर्थ किया है जो ठीक नहीं है । क्योंकि मूलमन्त्र.में वानस्पत्यके सहयोगी वनस्पति ओषधि और वीरुध शब्द आए हैं । जो भूमिसे स्वतन्त्र उत्पन्न हुए पदार्थ हैं । तथा चरक आयुर्वैदिक ग्रन्थमें उक्त चारों वस्तुएं एक ही श्लोकमें लक्षण सहित पढ़ी हैं । अतः इस मन्त्रमें इन चारों वस्तुओंका स्वरूप वही है जो चरकमें वर्णित है ।

२—विदित हो कि जो विद्वान् वैदिक शब्दोंके अर्थकरनेमें स्वरका इस प्रकार आग्रह करते हैं कि वेदोंमें स्वरव्यत्यय न माना जाय केवल यथास्वं स्वरके

अनुसार ही अर्थ करना चाहिये। यह इस प्रकार उनका आग्रह उचित नहीं है। क्योंकि यथावत् अर्थ करनेके लिए जैसे व्याकरणके सभी नियमोंमें यथावसर व्यत्यय होजाता है। एवं स्वरशास्त्र भी व्याकरणान्तर्गत होनेसे व्यत्ययका पात्र है। महर्षि पाणिनि और महाभाष्यकार पतञ्जलि मुनिने स्वरव्यत्ययकी स्थापनाकी है। प्रातिशाख्य ग्रन्थों में भी स्वरव्यत्यय को माना है। निरुक्तकार श्री यास्क मुनिने भी वस्तुतः अर्थ निरीक्षणमें प्रकरणविद्याको प्रधान माना है। स्थान २ पर स्वरकी तरफ ध्यान न देकर निर्वचन किया है। जैसे 'मेहना' एक पदमें 'म इह न' बहु पदमें। एवं इस प्रस्तुत मन्त्रमें "वानस्पत्यान्" शब्द अन्तोदात्त है। यदि स्वर प्रक्रियाको सर्वथा प्रधान मानकर अर्थ करें तो "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ( अष्टा० ४। १। ८५ ) से विकारादि अर्थ करना पड़ेगा। क्योंकि इस सूत्रसे पत्यन्त वनस्पति मूलशब्द से 'ण्य' प्रत्यय होकर प्रत्ययस्वरसे वानस्पत्य पद अन्तोदात्त है, किन्तु प्रकरणविद्याकी दृष्टिसे जो कि चरक श्लोक और मूल मंत्रके द्वारा दर्शाया गया है उसके विरुद्ध पड़ेगा। क्योंकि स्वरको प्रधानता से विकारादि ही अर्थ करना पड़ेगा। किन्तु यहां इस स्वरदृष्टिकी उपेक्षा करना ही यथावत् अर्थका कारण है। एवं अन्यत्र भी विद्यासम्बन्धी अर्थों में उपस्थित स्वर का तिरस्कार और स्वर-व्यत्ययका स्वीकार आवश्यकीय है॥

**पुन र्नः पितरो मनो ददातु दैव्यो जनः।**

**जीवं व्रातं सचेमहि॥ १०। ५७। ५, यजु० अ० ३। ५५**

( पितरो दैव्यो जनः पुनर्नो मनो ददातु ) पितरो हेऽन्नसुशिक्षाभ्यां पालकजनाः! दव्यो देवेषु विद्वत्सु जातो विद्वान्। "अत्र देवाद्यञञौ" ( अ० ४।१।८५ ) इति वार्तिकेन प्राग्दीव्यतीयान्तर्गते जातेऽर्थे यञ् प्रत्ययः। जनो विद्यापरोपकाराभ्यां जनयति प्रकटयति स पुनर्नोऽस्मभ्यं मनो धारणावतीं बुद्धिं ददातु प्रयच्छतु (जीवं व्रातं सचेमहि) जीवं ज्ञानसाधनयुक्तं जनमथ च व्रातं व्रतसमूहं सचेमहि समवेयाम। इति दयानन्दः॥

भावार्थ—( पितरो दैव्यो जनः पुनर्नो मनो ददातु ) हे अन्न सुशिक्षासे पालक जनो! तुम विद्वान् विद्या और धर्मके परोपकारसे प्रकट करने वाली फिर हमारे लिये सुधारणावती बुद्धिको प्रदान करे ( जीवं व्रातं सचेमहि ) ज्ञान साधन युक्त पुरुषको और उसके व्रत समूहको हम प्राप्त हों॥

शिक्षा—विद्वानोंमें जो सबसे बड़ा विद्वान् हो उसका यह कर्तव्य है कि वह मनुष्योंके अन्दर उत्तम बुद्धिको उत्पन्न करे और पितर जनों को भी आवश्यक है कि वे उस विद्वान्‌की सेवा करते हुवे उसके उपदिष्ट आचरणोंका पालन करें॥

इस मंत्रमें पालक अर्थमें पितर शब्दका प्रयोग है और इनका कार्य विद्यादि के प्रचारसे मानवसमाजकी रक्षा करना है ॥

**त्वेह यत् पितरश्चिन्न इन्द्र विश्वा वामा जरितारो असन्वन् ।**
**त्वे गावः सुदुघास्त्वे ह्यश्वास्त्वं वसु देवयते वनिष्ठः ॥**

ऋ० ७ । १८ । १

( इन्द्र त्वे यन्नः पितरश्चिज्जरितारो विश्वा वामा असन्वन् ) इन्द्र हे राजन् ! त्वयि यद्ये नोऽस्माकं पितरः पालयितारश्चिदपि जरितारः स्तावका विश्वा सर्वाणि वामा प्रशस्यान्यसन्वन् याचन्ते । यतः ( त्वे ह सुदुघा गावस्त्वे ह्यश्वाः ) त्वे त्वयि त्वत्पार्श्वे ह सुदुघाः सुष्ठुकामप्रपूरका गावस्त्वे त्वय्यश्वाः सन्ति (त्वं वनिष्ठो वसु देवयने) त्वं वनिष्ठोऽतिशयेन वनिता सम्भाजकः सन् वसु ददतीति शेषः । इति दयानन्दः ॥

भाषार्थ—( इन्द्र त्वे यन्नः पितरश्चिज्जरितारो विश्वा वामा असन्वन् ) हे राजन् ! तेरे आश्रय जो हमारे पालन करने वाले तथा ईश्वरकी स्तुति करने वाले जन राष्ट्रके लिये प्रशंसनीय सुखोंकी याचना करते हैं ( त्वेह सुदुधा गावस्त्वे ह्यश्वाः) क्योंकि तेरे अधीनही अच्छी गौवें और घोड़े हैं ( त्वं वनिष्ठो वसुदेवयते ) तू ही हे सेवनीय राजन् ! प्रजामें यथावश्यकता धन देता है ॥

शिक्षा—राष्ट्रके मुख्य प्रजानेता अपनी आवश्यकताओंको राष्ट्रपति अथवा राष्ट्रसभापतिको समझाकर उचित प्रबन्ध करावें ॥

इस मन्त्रमें प्रजापालक जनोंके अर्थमें पितर शब्द आया है जिनका कार्य प्रजाकी आवश्यकताओंको पूरा कराना है ॥

**मनो न्वा हुवामहे नाराशंसेन सोमेन । पितॄणां च मन्मभिः ॥**

ऋ० १० । ५७ । ३

**मनो न्वा ह्वामहे नाराशंसेन स्तोमेन । पितॄणां च मन्मभिः ॥**

यजुः अ० ३ । ५३

( नाराशंसेन स्तोमेन पितॄणां च मन्मभिर्मनो न्वाह्वामहे ) नराणां समन्ताच्छंसः प्रशंसनं नराशंसः, नराशंसेन निर्वृत्तस्तेन स्तोमेन स्तुतियुक्तव्यवहारेण पितॄणां पालकानामृतूनां ज्ञानवतां मनुष्याणां वा चापि मन्मभिर्मननैर्ज्ञानैर्विचारैश्च "सर्वधातुभ्यो मनिन्" ( उणा० ४ । १४८ ) मनो मननशीलं सङ्कल्पविकल्पात्मकं न्वाह्वामहे प्रस्पर्द्धामहे । इति दयानन्दः ॥

भावार्थ—(नाराशंसेन स्तोमेन पितॄणां च मन्मभिर्मनो न्वाह्वामहे) मनुष्यों के वास्तविक गुण विद्या कथन व्यवहारसे और ऋतुओंके तथा ज्ञानी मनुष्योंके रहस्य विचारोंसे, सङ्कल्पविकल्पात्मक मनको उद्बोधित करते हैं ॥

शिक्षा—ऋतुविज्ञान और विद्वत्सङ्गतिसे मानसिक विकास करना चाहिये ॥

इस मंत्रमें ऋतुओं तथा ज्ञानी जनोंके लिये पितर शब्दका प्रयोग है और इनका कार्य मानसिक विकास करना है ॥

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषो असत् ॥

यजुः अ० २ । ३३

( पितरो गर्भं पुष्करस्रजं कुमारमाधत्त ) पितरो विद्यादिदानेन पालका ज्ञानिनो जना गर्भं गर्भमिव पुष्करस्रजं विद्याग्रहणाय पुष्पमालाधारिणं कुमारं ब्रह्मचारिणमाधत्त धारयत ( यथेह पुरुषोऽसत् ) यथेह यथाऽत्रायं कुमारः पुरुषो विद्यापुरुषार्थयुक्तो मनुष्योऽसद् भवेत् । इति दयानन्दः ॥

आध्यात्मिकदृष्ट्या तु—

( पितरः पुष्करस्रजं कुमारं गर्भमाधत्त ) पितर ऋतवः प्राणा वा पुष्करस्रजं पुष्करं फुप्फुससहितं हृदयकमलं सृजति धारयति तं कुमारं कुत्सितमारं नित्यस्वरूपं जीवात्मानं शिशुं वा गर्भं गर्भरूपं वाऽऽधत्त समन्ताद्धारयत ( यथेह पुरुषोऽसत् ) यथेह यथात्र पुरुषः पुरिशयः शरीरधारी पूर्णोऽसद् भवेत् ॥

भावार्थ—( पितरो गर्भं पुष्करस्रजं कुमारमाधत्त ) विद्यादानसे पालक ज्ञानी जनों ! गर्भके तुल्य विद्याग्रहण के लिये पुष्पमाला धारण किये हुए ब्रह्मचारीको धारण करो ( यथेह पुरुषोऽसत् ) जिससे इस संसारमें यह कुमार विद्यापुरुषार्थसे युक्त मनुष्य बन जावे ॥

आध्यात्मिक दृष्टि से—

( पितरः पुष्करस्रजं कुमारं गर्भमाधत्त ) ऋतुएं या प्राण फुप्फुससहित हृदय कमलको धारण करने वाले अविनाशी जीवात्मा या बालक को गर्भरूपमें भलीप्रकार धारण करते हैं ( यथेह पुरुषोऽसत् ) जिससे कि यहां यह शरीरधारी पूर्ण पुरुष बन सके ॥

शिक्षा—( १, २ ) इस मन्त्रमें श्लेषालङ्कारसे आदिभौतिक और आध्यात्मिक दृष्टिसे यह सिद्ध होता है कि मनुष्य के दो जन्म होते हैं एक योनिजन्म दूसरा विद्याजन्म । विद्याजन्ममें गुरुजन ब्रह्मचारी को विद्यायुक्त पुरुष बनाने के लिए धारण

करते हैं दूसरे योनिजन्म में ऋतुएं और प्राण जीवात्माको शिशुरूपसे गर्भमें धारण करते हैं।

इस मन्त्रमें गुरुजनों या ऋतुओं तथा प्राणोंके लिये पितर शब्द आया है। इनका कार्य ब्रह्मचारीको विद्याग्रहण करनेके लिये अपने पास रखना तथा जीवात्मा को शिशुरूपमें गर्भ धारण कराना है॥

**विश्वामित्र वसिष्ठ जमदग्ने भरद्वाज गोतम वामदेव ।**
**शर्दिर्नो अत्रिरग्रभीन्नमोभिः सुसंशासः पितरो मृडता नः ॥**

अथ० १८ । ३ । १६

इस मंत्रमें प्राणोंके लिये पितर शब्द है। और वे विश्वामित्रादि नामसे श्रोत्रादिगत हैं। इनका कार्य शरीरको शासनमें रखते हुये स्वस्थ और सुखी बनाना है विवरणके लिए देखो सूक्त० अथ० १८ । ३ । १६ ( पृष्ठ १५६ )

**वर्चसा मां पितरः सोम्यासो अञ्जन्तु देवा मधुना घृतेन ।**
**चक्षुषे मा प्रतरं तारयन्तो जरसे मा जरदष्टिं वर्धन्तु ॥**

अथ० १८ । ३ । १०

इस मंत्रमें ऋतुओंके लिये पितर शब्द आया है। और उनका कार्य शरीर कान्ति, प्राण और रक्त द्वारा रक्तोत्पत्तिसे प्राणियोंकी पुष्टता करना है। विवरणके लिए देखो सूक्त० अथ० १८ । ३ । १० ( पृष्ठ १५२ )

**पितरः परे ते मावन्तु । अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥**

अथ० ५ । २४ । १५

( परे ते पितरो मावन्तु ) परे, आगमिष्यन्तस्ते पितर ऋतवो मां रक्षन्तु। सूक्ते-इन्द्रचन्द्रादिभौतिकपदार्थप्रकरणादत्र मन्त्रे पितर ऋतवः सन्ति। ते चेमे (अस्मिन् ब्रह्मणि) अस्मिन् वेदाध्ययने ( अस्मिन् कर्मणि ) अस्मिन् कर्तव्यकर्मणि ( अस्यां पुरोधायाम् ) अत्र पूर्वनिश्चित्यां पूर्वसङ्कल्पे ( अस्यां प्रतिष्ठायाम् ) अत्र प्रतिष्ठाने सुनिश्चिते कृत्ये ( अस्यां चित्याम् ) अस्यां वेद्यां ( अस्यामाकूत्याम् ) आह्वानेऽत्र (अस्यामाशिषि) अत्राशीर्बुद्ध्यां ( अस्यां देवहूतौ ) अत्र विद्वन्निमन्त्रणे ( स्वाहा ) सुभाषणमेवेदमस्ति॥

भावार्थ—( परे ते पितरो मावन्तु ) आने वाली ऋतुएं मेरी रक्षा करें ( अस्मिन् ब्रह्मणि ) इस वेदाध्ययनमें ( अस्मिन् कर्मणि ) इस कर्तव्य कर्ममें (अस्यां पुरोधायाम्) इस पूर्वधारणामें (अस्यां प्रतिष्ठायाम्) इस सुनिश्चितिमें (अस्यां चित्याम्) इस वेदोमें ( अस्यामाकूत्याम् ) इस पुकारमें ( अस्यामाशिषि ) इस इच्छा बुद्धिमें ( अस्यां देवहूतौ ) इस विद्वानोंके निमंत्रणमें ( स्वाहा ) ये सम्यक् उक्तियां हैं ॥

शिक्षा—हमारे वेदाध्ययन, शारीरिक कर्म, संकल्प, निश्चय, होम, आह्वान इच्छा और विद्वानों तथा उत्तम गुणोंकी प्राप्ति ऋतुओंके अनुसार जीवनचर्या पर निर्भर है ॥

इस मंत्रमें पितर शब्दका अर्थ ऋतुएं हैं । यहां सूक्तमें इन्द्र चन्द्रादि भौतिक पदार्थोंका प्रकरण है । उनके साथ ऋतु अर्थ ही उपयुक्त है । उनका कार्य मानवीय आन्तरिक भावनाओं वाणोकी क्रियाओं और शारीरिककर्म पर प्रभाव डालना है ॥

तमूषु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा
मध्यमो नभन्तामन्यके समे ॥ ऋ० ८ । ४१ । २

( सिन्धूनामुपोदये य सप्तस्वसा मध्यमः ) सिन्धूनां स्यन्दमानानामान्तरिक्ष्यापामपोदये वृष्टिरूपेऽपसरणे यः सप्तस्वसा सप्तविधविद्युद्गर्जनावान् । "वाताय कपिला विद्युदातपायातिलोहिनी०" (महाभाष्ये २।३।१३) इति चानुमानशास्त्रम् । मध्यमो मध्यमस्थानीयो वरुणो मेघकारणं वृष्टिप्रवर्तको देवोऽस्ति ( तमूषु समना गिरा पितॄणां च मन्मभिर्नाभाकस्य प्रशस्तिभिः ) तं वरुणं मेघकारणमवश्यं समना समानया वृष्ट्युपयोग्याहुतिपरिणामेन सह गिरा गीत्या मन्त्रोच्चारणरूपस्तवनेन मेघरागेणेत्यर्थः । पितॄणामृतूनामृतुसम्बन्धिनां मन्मभिर्मननीयैः स्तोमैर्यज्ञैः । "यदु ह किञ्च देवाः कुर्वते स्तोमेनैव तत्कुर्वते यज्ञो वै स्तोमो यज्ञेनैव तत्कुर्वते" ( श० ८ । ४ । ३ । २ ) नाभाकस्य नभकं मेघावृताकाशः" नभ्नाति व्याप्नोति मेघेन । नभ—अकः "पिनाकादयश्च" ( उणा० ४ । १५ । इति शब्द कल्पद्रुमः ) 'नभाति न प्रकाशत इति नभाकं मेघयुक्तमाकाशमिति दयानन्दस्तत्रैवोणादौ' । नभाकस्य मेघवृताकाशस्य शास्त्रं नाभाकम् । तस्येदमिति ताद्धितोऽण् । तस्य नभाकस्य मेघावृताकाशसम्पादननिमित्तशास्त्रस्य प्रशस्तिभिः प्रशंसनीयक्रियाभिरभिष्टौम्याह्वयाम्यनुतिष्ठामि वा ( अन्यके समे नभन्ताम् ) अन्यकेऽन्ये समे सर्वे विघ्नकारिणः पदार्था वा नभन्तां मा भुवन् । घनवृष्टिपातान्धकारेण न दृश्येरन् वेति वृष्टिपातनसिद्धान्तोऽत्र, तथा च निरुक्तम् "वरुणो वृणोतीति सतः ।

तस्यैषा भवति—नीचीनवारं कबन्धं प्रससर्ज रोदसी अन्तरिक्षम्। तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥ नीचीनद्वारं कबन्धं मेघमित्येवं प्रकृत्य तस्यैषाऽपरा भवति—तमूषु... तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणां च माननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः ( ऋषिर्नाभाको बभूव ) यः स्यन्दमानानामासामपामपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यते अथैष एव भवति नभन्तामन्यके समे। मा भुवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसङ्कल्पाः ( निरुक्त १०।५ )॥

विशेष—"ऋषिर्नाभको बभूव" इति पाठो दुर्गाचार्य्यासम्मतः। कथंचिद् भवेदप्यृषीणामुपाधिवादेन शक्यो वर्णयितुं विशेषं तु वैदिकेतिहासप्रकरणे दर्शयिष्यामः॥

भाषार्थ—( सिन्धूनामपोदये यः सप्तस्वसा मध्यमः ) स्यन्दमान अन्तरिक्ष जलों के वृष्टिरूप अपसरणमें जो सात प्रकार की विद्युद्गर्जनावाला मेघका कारण वृष्टिप्रवर्तक देव है ( तमूषु समना गिरा पितॄणां च मन्मभिर्नाभाकस्य प्रशस्तिभिः ) उस मेघके कारणको अवश्य उचितनियम या वृष्ट्युपयोगीपरिमाणसे मन्त्रोच्चारणरूप गीति और ऋतुसम्बन्धी सिद्धान्तों तथा यज्ञों और मेघावृताकाश सम्पादननिमित्तशास्त्रकी प्रशंसनीय क्रियाओंसे वृष्टिका आह्वान करता हूँ ( अन्यके समे नभन्ताम् ) अन्य सब विघ्नकारी पदार्थ न हों घने वृष्टिपातके अन्धकारसे न दिखलाई पड़ें। इस प्रकार मैं वृष्टिशास्त्रका जानने वाला विद्वान् वृष्टिको भूमि पर लाता हूँ॥

शिक्षा—वृष्टिशास्त्रका जानने वाला विद्वान् आकाशकी जलधाराओं को मेघके रूपमें सम्पादन करके उचित परिमाणसे ऋतुके अनुकूल यज्ञ और मेघरागमें वृष्टिस्तोत्रोंके गानसे पृथिवी पर घन वृष्टिपात करे॥

इस मन्त्रमें ऋतुओंके लिए पितर शब्द आया है। और उनका कार्य वृष्टिपातके लिये ऋतुसिद्धान्त और ऋतुक्रमका ज्ञान आवश्यक है॥

**इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः पात्विदमहन्तप्तं वा बहिर्द्धा यज्ञान्निःसृजामि॥ यजु० अ० ५।११॥**

( इन्द्रघोषो वसुभिस्त्वा पुरस्तात्पातु ) इन्द्रस्य विद्युतो घोषो विविधशब्दार्थसम्बन्धो यस्य स इन्द्रघोषो वसुभिरग्न्यादिभिस्त्वा तां पुरस्तात्पूर्वस्मात्पातु रक्षतु ( प्रचेता रुद्रैस्त्वा पश्चात्पातु ) प्रचेताः प्रकृष्टसन्तानिमित्तः प्रकृष्टज्ञानो वा रुद्रैः प्राणैः पश्चाद्रक्षतु ( मनोजवाः पितृभिस्त्वा दक्षिणतः पातु ) मनोवज्जवो यस्य

स पितृभिर्ज्ञानिभिर्ऋतुभिर्वा त्वा तां रक्षतु ( विश्वकर्मादित्यैस्त्वोत्तरतः पातु ) विश्वानि कर्माणि यस्य स आदित्यैर्मासैस्त्वा तामुत्तरतो रक्षतु ( अहं यज्ञात् तप्तमिदं वा बहिर्द्धा निःसृजामि ) अहं यज्ञाद् होमलक्षणादिदमन्तर्जलम् "इदं जलनाम" (नि० १।१२) वा बहिस्थं जलं बहिर्द्धा बाह्यदेशे निःसृजामि प्रक्षिपामि । इति दयानन्दः ॥

भाषार्थ—( इन्द्रघोषो वसुभिस्त्वा पुरस्तात् पातु ) विद्युत् का घोष विविध शब्दार्थ सम्बन्ध जिसका है ऐसा वह अध्वर्युरूप सूर्य अग्नि आदि पदार्थोंके साथ पूर्वकी ओरसे रक्षा करे ( प्रचेता रुद्रैस्त्वा पश्चात् पातु ) उत्तम चेतावनीका निमित्त स्वयं सचेत हुआ होता रूप वरुण प्राणोंके द्वारा पश्चिमकी ओरसे रक्षा करे। ( मनोजवः पितृभिस्त्वा दक्षिणतः पातु ) मनके समान वेग वाला वायुरूप ब्रह्मा ऋतुओंके द्वारा दक्षिणसे रक्षा करे ( विश्वकर्मा आदित्यैस्त्वोत्तरतः पातु ) सब प्रकारके कर्म जिसके हों वह सोमरूप उद्गाता मासोंके द्वारा उत्तरकी ओरसे रक्षा करे ( अहं यज्ञात्तप्तमिदं वा बहिर्द्धा निःसृजामि ) मैं ईश्वर होमयज्ञसे तप्त हुये इस भीतरके जलको बाहर वाले जलमें बाहरकी ओर फेंकता हूँ ॥

शिक्षा—यज्ञके अनुष्ठानसे बिजलीके समान ध्वनि वाली वाणी या अध्वर्यु यजमानकी पूर्वदिशासे, सम्यक् चेतावनी देनेवाली वाणी या होता पश्चिमसे और मनके तुल्य वेगवाली वाणी या ब्रह्मा दक्षिणसे सबकर्मोंकी विधायक वाणी या उद्गाता उत्तरसे रक्षा करते हैं । एवं ईश्वर भी यज्ञसे उष्ण हुये जलको नीचे गिराता है ॥

इस मन्त्रमें पितर शब्दका वसन्तादि ऋतु अर्थ है । वस्तुविज्ञानकी चर्चा इस मन्त्रमें है । अतः ऋतुक्रमविज्ञान सङ्गत है । इनका कार्य उत्पन्न होने वाले पदार्थों की रक्षाका है ॥

**यत्ते अङ्गमतिहितं पराचैरपानः प्राणो य उ वा ते परेतः ।**
**तत्ते सङ्गत्य पितरः सनीडा घासाद्घासं पुनरावेशयन्तु ॥**

अथ० १८ । २ । २६

इस मन्त्रमें ऋतु सहचरित रश्मियोंके अर्थ में पितर शब्द है । और इनका कार्य जीवात्माओं को एक शरीरसे दूसरे शरीरमें जन्म देना है । विवरणके लिए देखो सूक्त० अथ० १८ । २ । २६ ( पृष्ठ १२६ )

**अरुरुचदुषसः पृश्निरग्रिय उक्षा बिभर्त्ति भुवनानि वाजयुः ।**
**मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥**

ऋ० ९ । ८३ । ३

( पृश्निरग्रिय उषसोऽरुरुचत् ) पृश्निरादित्यः "पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति" ( निरुक्त २ । १४ ) अग्रियो मुख्यः सन्नुषसोऽरुरुचद्रोचयति प्रकाशयति ( उक्षा वाजयुर्भुवनानि बिभर्त्ति ) उक्षा वृष्टिजलसेक्ता वाजयुः प्राणिभ्योऽन्नमिच्छन् सन् भुवनानि लोकान् बिभर्त्ति धारयति ( अस्य मायया मायाविनो नृचक्षसः पितरो गर्भमादधुर्ममिरे ) अस्यादित्यस्य मायया निर्माणशक्त्या ये मायाविनो निर्माणशक्तिमन्तो नृचक्षसः प्राणिमात्रस्य दर्शयितारोऽभिव्यक्तिहेतवो वा पितरः सूर्यरश्मयः । तथा च सायणः । "पितरो जगद्रक्षका रश्मयः" गर्भमादधुः पृथिव्यामुत्पत्तुं योग्यस्य गर्भमाधत्तवन्तः । अथ च तं गर्भं ममिरे निर्मितवन्तः ॥

भाषार्थ—(पृश्निरग्रिय उषसोऽरुरुचत्) आदित्य सब लोकलोकान्तरोंमें मुख्य होकर दिनका प्रकाश करता है ( उक्षा वाजयुर्भुवनानि बिभर्त्ति ) जलका सींचन करने वाला प्राणिमात्रके लिये मानो अन्नको चाहता हुवा पृथिवी आदि लोकोंको धारण करता है ( अस्य मायया मायाविनो नृचक्षसः पितरो गर्भमादधुर्ममिरे ) इस आदित्यकी निर्माणशक्तिवाले जो भी प्राणीमात्रके दर्शनशक्तिके हेतु सूर्यरश्मियां उत्पत्ति योग्य गर्भको धारण करती हैं और उस गर्भको निर्माण करती हैं ॥

शिक्षा—सूर्यका प्रकाश सब लोगोंकी स्थितिका कारण है और उसकी निर्माणशक्तिसे शक्तिवाली रश्मियां संसारके गर्भमात्रको धारण तथा उत्पन्न करती हैं ॥

इस मन्त्रमें सूर्यरश्मियोंके लिये पितर शब्द आया है और उनका कार्य संसारके जीवमात्रके गर्भको पुष्ट और उत्पन्न करना है ॥

**उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।**

**असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ ऋ० १०।१५।१**

**यजु० अ० १४ । ४९, अथ० १८ । १ । ४४**

इस मन्त्रमें प्रातः, मध्य और तृतीयसवनके यज्ञमें प्राप्त सूर्यरश्मियोंके लिये तीन बार पितर शब्द का प्रयोग है । इनका कार्य प्राणिमात्रके जीवनका विकास करना है । विवरणके लिये देखो सूक्त० ऋ० १० । १५ । १ ( पृष्ठ ४१ )

**वीळु चिद् दृढा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण ।**

**चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥ ऋ० १।७१।२**

( पितरो नो दृढा वीळु चिदुक्थैरद्रिं रुजन् ) पितर उत्पत्तिनिमित्ताः पालनहेतवो वा प्रावृषेण्याः सूर्यरश्मयो नोऽस्मभ्यं जीवेभ्यो दृढा दृढेन वीळुना बलेन "वीळु बलनाम" ( नि० २ । ६ ) दृढा-वीळु 'सुपांसुलुक्पूर्वसवर्णाच्छे०' इत्य-

नेनाकारलापौ भवतः'। चिदप्युक्थैः परिभाषणैर्महद्ध्वनिभिर्गर्जनैरद्रिं मेघं रुजन् भञ्जयन्ति। 'रुज भङ्गे तुदादिस्ततः सामान्यकाले लुङ्' (अङ्गिरसो रवेण चक्रुः) अङ्गिरसो देदीप्यमाना ग्रीष्मर्तुकाः सूर्यरश्मयो रवेण रेषणेन निजभेदनशक्त्या। 'रुङ् गतिरेषणयोः' चक्रुर्यमद्रिं मेघं निर्मितवन्तः ( उस्रा अस्मे बृहतो स्वः केतुमहर्गातुं विविदुः ) उस्रा वर्षाकालानन्तरं विविधगुणानां वासयितारः शारदाः सूर्यरश्मयः "उस्रेति रश्मिनाम" ( नि० १। ५ ) अस्मेऽस्मभ्यं बृहतो महतो दिवो मेघमण्डलान्निवृत्य महत आकाशस्य मध्ये वा स्वरादित्यं विविदुर्लब्धवन्तः। अत एव केतुमुषसं विविदुर्लब्धवन्तस्तदैवाहर्दिनं विविदुर्लब्धवन्तोऽथ गातुं पृथिवीं पुनर्विविदुर्लब्धवन्तः "गातुः पृथिवी नाम ( नि० १। १ )

भाषार्थ—( पितरो नो दृढा वीलु चिदुक्थैरद्रिं रुजन् ) उत्पत्तिके निमित्त पालनहेतु वर्षाकालकी सूर्यरश्मियां जीवोंके लिए दृढ़ बलसे गर्जनशब्दोंके साथ मेघको छिन्न भिन्न करती हैं ( अङ्गिरसो रवेण चक्रुः ) ग्रीष्म ऋतु की देदीप्यमान रश्मियां निज रसग्रहण शक्तिसे जिस मेघको बनातीं हैं ( उस्रा अस्मे बृहतो स्वः केतुमहर्गातुं विविदुः ) वर्षाकालके अनन्तर विविध गुणोंका वास करानेवाली शीतकालकी रश्मियां हमारे लिये बड़े भारी मेघमण्डलसे निवृत्त होकर या विस्तृत आकाश के बीचमें वर्तमान आदित्यको प्राप्त करती हैं अर्थात् निर्मल आकाशमें सूर्य को प्रकाशित करती हैं। अत एव उषा को प्राप्त होती हैं पुनः दिन को प्राप्त होती हैं अनन्तर पृथिवीको प्राप्त होती हैं।

शिक्षा—ग्रीष्मकालकी देदीप्यमान सूर्यरश्मियां रस-भेदन शक्तिसे मेघ बनाती हैं पुनः वर्षाकालकी सूर्य रश्मियां दृढ़ बलसे उस मेघको गर्जन शब्दोंके साथ छिन्न भिन्न कर नीचे गिराती हैं पुनः वर्षाकालके अनन्तर शीतकालकी रश्मियां विस्तृत आकाशमें वर्तमान सूर्यको प्राप्त हुई उषा ( प्रभात वेला ) दिनका प्रकाश करके पृथिवीको प्राप्त होती हैं। ये इस प्रकार त्रैकालिक अथवा ग्रीष्म वर्षा और शरद् की प्रधान ऋतुओं का रश्मिविज्ञान है॥

इस मन्त्रमें वर्षा ऋतुकी सूर्य रश्मियोंके लिये पितर शब्द आया है। इन का कार्य मेघको तोड़ फोड़कर वृष्टि करना है॥

आविरभून्महि माघोनमेषां विश्वं जीवं तमसो निरमोचि।
महि ज्योतिः पितृभिर्दत्तमागादुरुः पन्था दक्षिणाया अदर्शि॥

ऋ० १०। १०७। १

( एषां माघोनं महि-आविरभूत् ) एषां सूर्यरश्मीनां माघोनमैन्द्रं सौरं महि महत्वमाविरभूत् प्रकटितमभवत् ( विश्वं जीवं तमसो निरमोचि ) विश्वं सकलं जीवं जीवमात्रं जीवसंसारं तमसोऽन्धकारान्निरमोचि पृथक्कृतवान् ( पितृभिर्दत्तं महि ज्योतिरुदगात् ) पितृभी रश्मिभिर्दत्तं महि महज्ज्योतिरुदगात्प्रकटमभूत् ( दक्षिणाया उरुः पन्था अदर्शि ) दक्षिणायास्त्यागस्य "त्यागं दक्षिणा" ( प्राणाग्निहोत्रोप० ३ ) उरुर्महान् पन्था मार्गोऽदर्शि दृष्टोऽभूत् ।

भाषार्थ—( एषां माघोनं महि, आविरभूत् ) इन सूर्य रश्मियोंका सूर्य-सम्बन्धि महत्व अर्थात् तेज प्रकट हुआ ( विश्वं जीवं तमसो निरमोचि ) सकल जीवसंसारको अन्धकारसे छुड़ाया ( पितृभिर्दत्तं महि ज्योतिरुदगात् ) एवं रश्मियों द्वारा दिया हुआ सूर्यका प्रकाश प्रकट हुआ ( दक्षिणाया उरुः पन्थाऽदर्शि ) त्याग का बड़ा मार्ग दिखलाई पड़ा ॥

शिक्षा—सूर्यका स्वतःप्रकाश रश्मियों द्वारा जब प्रकट होता है तो सकल जीवसंसार अन्धकारसे छूट जाता है। यह एक प्रकाशका दान मनुष्योंके लिये त्यागका मार्ग दिखलाता है ॥

इस मन्त्रमें सूर्यरश्मियोंके लिये पितर शब्द है। इनका कार्य सूर्यप्रकाश को सब जीवों तक पहुँचा कर अन्धकारसे छुड़ाना है ॥

अवन्तु मामुषसो जायमाना अवन्तु मा सिन्धवः पिन्वमानाः ।
अवन्तु मा पर्वतासो ध्रुवासोऽवन्तु मा पितरो देवहूतौ ॥

ऋ० ६ । ५२ । ४

( जायमाना उषसो मामवन्तु ) उत्पद्यमाना उषोवेला मां रक्षन्तु ( पिन्वमानाः सिन्धवो मामवन्तु ) सिञ्चन्त्यो नद्यो मां रक्षन्तु । 'पिवि सेवने सेचने च' "सिन्धु-नदीनाम" ( नि० १ । १३ ) ( ध्रुवासः पर्वतासो मामवन्तु ) स्थिराः शैला मां रक्षन्तु ( देवहूतौ पितरो मामवन्तु ) देवानामग्न्यादीनां हूतौ हूत्यै निवेशाय 'निमित्तसप्तमी' पितरो रश्मयो मां रक्षन्तु । अत्र मूर्तिमत्प्रकरणात्सहचाराद्वा पितृशब्दो न मृतजनार्थः कश्चिद् ग्रहीतुं शक्यः ॥

भाषार्थ—( जायमाना उषसो मामवन्तु ) प्रति दिन उदय होने वाली उषाएं मेरी रक्षा करें ( पिन्वमानाः सिन्धवो मामवन्तु ) जल सीञ्चन करती हुवी नदियां मेरी रक्षा करें ( ध्रुवासः पर्वतासो मामवन्तु ) स्थिर हुवे पहाड़ मेरी रक्षा करें ( देव-

हुतौ पितरों मामवन्तु ) अग्नि आदि पदार्थों की स्थापनाके लिए सूर्य रश्मियां मेरी रक्षा करें ॥

शिक्षा—वस्तुविज्ञान द्वारा मनुष्यको प्रातः कालकी उषाओं, नदियों, पर्वतों और सूर्यकिरणोंसे अनेक लाभदायक उपयोग लेने चाहिये ॥

इस मंत्रमें भौतिक वस्तुओंका वर्णन होने से पितर शब्दका अर्थ सूर्य रश्मियां हैं। जिनका कार्य अग्नि आदि द्योतमान तथा दिव्यगुण पदार्थों की स्थिरता करनी है ॥

अभिश्यावं न कृशनेभिरश्वं नक्षत्रेभिः पितरो द्यामपिंशन्।
रात्र्यां तमो अदधुर्ज्योतिरहन् बृहस्पतिर्भिनदद्रिं विदद्गाः ॥
ऋ० १० । ६८ । ११, अथ० २० । १६ । ११

( कृशनेभिः श्यावमश्वं न पितरो नक्षत्रेभिर्द्यामभिपिंशन् ) कृशनेभिः कृशनैर्हिरण्यैः सुवर्णभूषणैः श्यावं कृष्णमश्वं न यथा जना भूषयन्ति तथा पितरः सूर्यरश्मयो नक्षत्रेभिर्नक्षत्रैर्द्यां द्युलोकमभिपिंशन्नभिरूपयन्ति। यावन्ति प्रकाशमानानि नक्षत्राणि दृश्यन्ते तानि सूर्यरश्मिभिः प्रकाश्यन्त इति ज्यौतिषसिद्धान्तो ज्ञाप्यते ( रात्र्यां तमोऽदधुरहन् ज्योतिः ) रात्रौ तमोऽन्धकारमदधुः स्थापितवन्तोऽहन् दिने ज्योतिः स्थापितवन्तः ( बृहस्पतिरद्रिं भिनद्गाविदत् ) बृहस्पतिः सूर्योऽद्रिं मेघं भिनद् भित्तवान् तदा च गा निजरश्मीन् प्राप्तवान् ॥

भावार्थ—( कृशनेभिः श्यामवश्वं न पितरो नक्षत्रेभिर्द्यामभिपिंशन् ) सुवर्ण भूषणोंसे काले घोड़े को जैसे लोग सजाते हैं एवं सूर्यरश्मियां नक्षत्रोंसे द्युलोकको शोभायमान करती हैं अर्थात् जितने भी प्रकाशमान नक्षत्र दिखाई पड़ते हैं वे सब सूर्यरश्मियोंसे प्रकाशित होते हैं यह एक ज्योतिष्सिद्धान्त है ( राज्यां तमोऽदधुरहन् ज्योतिः ) वे रश्मियां रात्रिमें अन्धकारको स्थापित करती हैं और दिनमें प्रकाशको ( बृहस्पतिरद्रिं भिनद्गाविदन् ) सूर्य मेघको छिन्न भिन्न करके स्वरश्मियों से प्रकाशमान होता है ॥

शिक्षा—आकाशके अन्दर जितने प्रकाशवाले नक्षत्रादि दीखते हैं, वे सब सूर्यरश्मियोंसे प्रकाशित हैं। रश्मियोंके अवर्तमानसे रात्रिमें अन्धकार और प्रकाशसे दिन प्रकट होता है ॥

इस मन्त्रमें सूर्यरश्मियोंके लिये पितर शब्द आया है। इनका कार्य नक्षत्र तारागणको प्रकाश देना और दिनको प्रकाशित करना है ॥

परिणाम— इस प्रकरणमें ७ वस्तुओंके अर्थमें पितर शब्द आया है जिनमें—

( १ ) माता पितादि कुटुम्बी जन हैं जिनका कार्य होम द्वारा धर्मानुष्ठान, निज सम्पत्तिका सन्तानके प्रति समर्पण, स्वजीवन उपयोगी अनुभवों का सन्तानको उपदेश देना है।

( २ ) शिक्षकादि ज्ञानी जन हैं जिनका कार्य ब्रह्मचारियोंको विद्यालयमें या अपने पास रखकर विद्याप्राप्ति कराके मनोविकास करना तथा अन्य लोगोंको भी सभा या सम्मेलनमें उपदेश करके उल्टे मार्ग से हटाना, ब्रह्मसंगतिसे आत्मविकास कराना है।

( ३ ) सैनिक जन हैं जिनका कार्य शत्रुसेनासे युद्ध करना, उनको मारना तथा पापियोंको परास्त करना और मृत्युदण्ड भी देना है।

( ४ ) पालकजन हैं जिनका कार्य मानव समाजको रक्षा तथा प्रजाकी आवश्यकताएं पूरी करना है।

( ५ ) सूर्य किरणें हैं उनका कार्य प्राणीमात्रके गर्भको पुष्ट करना और बाहर निकालना, जीवनका विकास करना, अन्धकार हटाना, मेघ बनाना, वृष्टि करना, पृथिवीको विविध गुणोंसे युक्त करना, नक्षत्र तारागण और दिनका प्रकाश करना है।

( ६ ) प्राण हैं जिनका कार्य जीवात्माको गर्भ में धारण करना है।

( ७ ) ऋतुएं हैं उनका कार्य जीवात्माको गर्भमें पहुँचाना, धारण करना, मानवीय भावनाओं-वाणीव्यापार-शारीरिकक्रिया पर प्रभाव डालना और मनोविकास करना, उत्पन्न होने वाले पदार्थों को रक्षा करना तथा वृष्टिके लिये ऋतुक्रम विज्ञानका परिचय है।

## पितरों के प्रति कर्तव्य

इस प्रकरणमें वे मन्त्र होंगे जिनमें पितरोंके प्रति कर्तव्यों का निर्देश है।

**यदा गार्हपत्यमसपर्यैत् पूर्वमग्निं वधूरियम्।**
**अधा सरस्वत्यै नारि पितृभ्यश्च नमस्कुरु ॥ अथ० १४। २। २०**

( यदेयं वधूः पूर्वं गार्हपत्यमग्निमसपर्यैत् ) यदैषा वधूर्नवविवाहिता पूर्वं प्रथमं गार्हपत्यं गृहस्थसम्बन्धिनमग्निमसपर्यैत् प्राप्ता भवेत् ( अधा नारि सरस्वत्यै पितृभ्यश्च नमस्कुरु ) अथानन्तरं तदा सा वधूरेवं वरेणाज्ञापनीया यद् हे नारि ! त्वं

सरस्वत्यै-आज्ञारूपायै मे वाण्यै तथा मम पितृभ्यश्च नमस्कुरु स्वागतं कुरु। न कदाचिद्विरुद्धा स्याः ॥

भाषार्थ—( यदेयं वधूः पूर्वं गार्हपत्यमग्निमसपर्य्यैत् ) जब यह नवविवाहिता वधू प्रथमवार ही गार्हपत्य अग्निको प्राप्त होवे अर्थात् पतिके घरमें जावे ( अधा नारि सरस्वत्यै पितृभ्यश्च नमस्कुरु ) तब वरकी ओरसे उसको आदेश किया जावे कि हे पत्नि ! तू आज्ञारूप मेरी वाणीके लिए तथा मेरे माता पिता आदि कुटुम्बी जनोंके लिए स्वागत कर। कभी विरुद्ध न हो ॥

शिक्षा—जिस समय नव-विवाहिता स्त्री घरमें आवे तो उसके पतिकी ओर से शिष्टाचार सम्बन्धी बातोंका आदेश करना चाहिये। जिससे कि वह उसके लिये तथा उसकी माता पिता आदिके लिये यथावत् वर्ताव कर सके।

इस मंत्रमें पितर शब्द कुटुम्बी जनोंके अर्थमें आया है। और उनके लिये पुत्र वधूकी ओरसे आदर करनेका आदेश है ॥

**पुत्रं पौत्रमभितर्पयन्तीरापो मधुमतीरिमाः।**

**स्वधां पितृभ्य अमृतं दुहाना आपो देवीरुभयांस्तर्पयन्तु ॥**

**अथ० १८। ४। ३९**

इस मन्त्रमें पितर शब्द माता पिता आदि पूर्वज कुटुम्बी जनोंके अर्थमें आया है, और गोधूम आदि ओषधिरस उनके पोषणके लिये भी हैं और पुत्र पौत्रादि के लिये भी, ऐसा वर्णन है, विवरणके लिये देखो सूक्त० १८। ४। ३६ ( २०६ )

**ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।**

**स्वधाः स्थ तर्पयत मे पितॄन् ॥ यजु० २। ३४**

( ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधाः स्थ ) ऊर्जं रसं वहन्तीः प्रापयन्त्य आपोऽमृतं सर्वरोगहरं मिष्टादिकं वस्तु घृतं पयो दुग्धं कीलालमन्नम्, "कीलालमन्ननाम" ( नि० २। ७ ) परिस्रुतं परिपक्वं फलम्। इत्येवं यूयं स्वधाः स्थ स्वधानामभिर्वक्तव्याः स्थ, यतो हि मे पितॄन् तर्पयतोपहारदानेन मम पालकजनान् प्रसादयत। अथवा घृतादिसहिताः शुद्धा आपः स्वधावाच्याः सन्तीति विज्ञेयम् ॥

भाषार्थ—( ऊर्जम् ) रसको ( वहन्तीः ) प्राप्त कराते हुए जल ( अमृतम् ) सर्वरोगोंको हरनेवाली मिष्टादि वस्तु ( घृतम् ) घी ( पयः ) दूध ( कीलालम् ) अन्न ( परिस्रुतम् ) परिपक्वफल ये सब पदार्थ मिलकर ( स्वधाः स्थ ) स्वधा नामसे कहे

जाने वाले हो या हैं। ( पितॄन् मे तर्पयत ) मेरे पालकजनों को तृप्त करो, या तृप्त करते हैं ॥

शिक्षा—पूजनीय माता पिता आदि वृद्ध जनों और गुरु आदि विद्वान् महानुभावोंकी सेवा जल तथा विविध रसीले पदार्थों मिष्टादि वस्तु घी, दूध, अन्न और फलोंके उपहारद्वारा करनी चाहिये ॥

इस मन्त्रमें कुटुम्बीजनों और गुरु आदि विद्वान् महानुभावोंके लिये पितर शब्द आया है और उनके लिये उत्तमोत्तम भोजनोंका प्रदान करना इष्ट है। यहां जलतर्पणका कोई प्रसङ्ग नहीं है, और न ही मन्त्रमें इसका लेश है, किन्तु घृतादि छः पदार्थों का स्पष्ट नाम लिखा है, जो कि मनुष्य जीवनके लिये उपयोगी पदार्थ हैं अत एव इनके द्वारा पूज्य पालकजनोंकी सेवा करने का उपदेश है ॥

यत् ते पितृभ्यो ददतो यज्ञे वा नाम जगृहुः ।
संदेश्यात् सर्वस्मात् पापादिमा मुञ्चन्तु त्वौषधीः ॥

अथर्व० १० । १ । ११

( यज्ञे वा पितृभ्यो ददतस्ते यन्नाम जगृहुः ) यज्ञे पितृयज्ञे वृद्धजनानां सेवाकर्मणि वा पितृभ्यो वृद्धपालकजनेभ्यो ददतोऽन्नादि समर्पयतस्तव यन्नाम प्रशंसापूर्वकं यशोरूपं जगृहुस्ते पितरो गृहीतवन्तः प्रकाशितवन्तः ( सन्देश्यात्सर्वस्मात्पापादिमा ओषधीस्त्वा मुञ्चन्तु ) अतस्त्वां संदेश्याद्वक्तुं योग्यात् स्पष्टाद् व्यक्तात् सर्वस्मात् पापाद्रोगादिमा मया चिकित्सकेन दीयमाना ओषधीरोषधयो मुञ्चन्तु ॥

भाषार्थ—( यज्ञे वा पितृभ्यो ददतस्ते यन्नाम जगृहुः ) पितृयज्ञमें वृद्ध पालक जनों की सेवाके निमित्त अन्नादि पदार्थको समर्पण करते हुवे तुझ सेवकका नाम प्रशंसापूर्वक यशके साथ उक्त पालक जनोंने जब कहीं प्रसंगमें प्रकाशित किया है ( सन्देश्यात्सर्वस्मात् पापादिमा ओषधीस्त्वा मुञ्चन्तु ) अत एव तुझको प्रसिद्ध हुवे सर्व-पाप अर्थात् रोगसे मुझ चिकित्सक द्वारा दी हुई ओषधियां छुड़ा देवें ॥

शिक्षा—पालक वृद्ध जनोंके लिये जो उत्तमोत्तम अन्नादि ओषधियोंका दान करता है उसका वे महानुभाव प्रशंसापूर्वक यशोगान करते हैं। और उसका नाम प्रसिद्ध करते हैं अत एव वे दानकी ओषधियां उसको पापसे अथवा किसी चिकित्सक द्वारा दी हुई रोगसे छुड़ाती हैं।

इस मंत्रमें कुटुम्बीवृद्ध तथा ज्ञानीपालक जनोंके अर्थमें पितर शब्द आया

है। उनके लिये नानाविध भोजनोंका दान तथा दाताका प्रशंसापूर्वक नाम प्रसिद्ध करनेका वर्णन है ॥

**पितृभ्यः स्वधायिभ्यः स्वधा नमः। पितामहेभ्यः स्वधायिभ्यः स्वधा नमः। प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त। पितरः पितरः शुन्धध्वम्॥ यजु० १९। ३६॥**

( स्वधायिभ्यः पितृभ्यः स्वधा नमः ) ये स्वधामुदकमन्नं वैतुं प्राप्तुं शीलास्तेभ्यः "स्वधेत्युदकनाम" ( नि० १ । १२ ) "स्वधेत्यन्ननाम" ( नि० २ । ७ ) पितृभ्यः पालकेभ्यो जनकाध्यापकादिभ्यः स्वधाऽन्नं नमः सत्करणमस्तु ( स्वधायिभ्यः पितामहेभ्यः स्वधा नमः ) अन्नाद्याप्तुं शीलेभ्यः पितॄणां पितृभ्योऽन्नं सत्करणमस्तु ( स्वधायिभ्यः प्रपितामहेभ्यः स्वधा नमः ) अन्नाद्याप्तुं शीलेभ्यः पितामहानां पितृभ्योऽन्नं सत्कारश्चास्तु ( पितरोऽक्षन्नमीमदन्त ) पितरो ज्ञानिनोऽक्षन्नदन्तु-अत्त। 'पुरुष लकारव्यत्ययौ' अमीमदन्तास्मान् हर्षयत ( पितरोऽतीतृपन्त ) पितरोऽतिशयेन तर्पयत -(-पितरः पितरः शुन्धध्वम् ) ये सर्वे पितरस्ते यूयं पवित्री कुरुत। इति दयानन्दः ॥

**स्पष्टीकरणम्**—( स्वधायिभ्यः पितृभ्यः स्वधा नमः ) स्वधायिभ्यः स्वं स्वकीयं कृतकर्मण उपहारभागं धातुं धारयितुं सेवितुं व्रतं येषां तेभ्यः। "व्रते" ( अष्टा० ३। २। ८० ) इति णिनिप्रत्ययस्तद्वच्च स्वरः। ते च द्विविधाः पितरो योनिसम्बन्धेनैके जनकादयो विद्यासम्बन्धेनापरे गुर्वादयस्तेभ्यः पितृभ्योऽन्नविद्यादिदानैः पालकेभ्यः स्वधाऽन्नं पक्वान्नमथ नमश्च। यथासम्भवं फलादिदानरूपसत्कारोऽस्तु। इति विशेषः ॥

भाषार्थ—( स्वधायिभ्यः पितृभ्यः स्वधा नमः ) जल या अन्न प्राप्त करने का शील जिनका है ऐसे उन पालक जनों जनकाध्यापक आदिकोंके लिये अन्न और सत्कार हो ( स्वधायिभ्यः पितामहेभ्यः स्वधा नमः ) अन्नादि प्राप्तिशील पालकोंके भी पालकोंके लिये अन्न और सत्कार हो ( स्वधायिभ्यः प्रपितामहेभ्यः स्वधा नमः ) अन्नादि प्राप्तिशील पितामहोंके पालकोंके लिये अन्न और सत्कार हो ( पितरोऽक्षन्नमीमदन्त ) हे ज्ञानी जनो! हमको प्रसन्न करो अतएव ( पितरोऽतीतृपन्त ) हे पालकजनो ! अतिशय करके तृप्त करो ( पितरः पितरः शुन्धध्वम् ) तुम सभी पालक महानुभावो पवित्र करो ॥

स्वकीय कृतकर्म का उपहार भाग धारण करने का व्रत या धर्म जिनका हो वे-महानुभाव स्वधायी कहलाते हैं। अर्थात् जो बिना किसीका उपकार किये दूसरे का

मुफ्त माल न खाते हों। वे दो प्रकारके पितर होते हैं एक योनिसम्बन्ध से जनकादि और दूसरे विद्यासम्बन्ध से गुरु आदि। सो वे दोनों प्रकारके पितर हमारा अन्न और विद्यादानसे पालन करते हैं। उनका प्रत्युपकार हमको पक्वान्न फलादिसे यथासम्भव सेवा सत्कारसे करना चाहिये ॥

शिक्षा—जिन महानुभावोने हमको उत्पन्न करके प्रत्येक प्रकारसे पाला तथा जिन्होंने विद्योपदेशसे मानवीय जीवनका सुखप्राप्त कराया उन पालक महानुभावोंकी सदा उत्तम अन्न और सत्कारादिसे सेवा करनी चाहिये जिससे वे महानुभाव भी हमको अपने आशीर्वादों और अनुभवोंसे हितचिन्तन कर सकेंगे ॥

इस मन्त्रमें माता पिता आदि कुटुम्बी जन और गुरु आदि ज्ञानीजन के अर्थमें पितर शब्द आया है। और इनका कार्य हमारा हित चिन्तन करना और अच्छे मार्ग पर डालना तथा हमारा कर्तव्य उनके प्रति उनकी अन्नादिसे सेवा करना है ॥

**व्याकरोमि हविषाहमेतौ तौ ब्रह्मणा व्यहं कल्पयामि।**
**स्वधा पितृभ्यो अजरां कृणोमि दीर्घेणायुषा समिमान्त्सृजामि ॥**

**अथ० १२।२।३२**

( तावेतावहं हविषा व्याकरोमि ब्रह्मणा व्यकल्पयामि ) तावेतौ देवयज्ञं ब्रह्मयज्ञं च हविषा व्याकरोमि सम्पादयामि ब्रह्मणा ब्रह्मध्यानेन वेदेन वा व्यकल्पयामि समनुतिष्ठामि ( पितृभ्योऽजरां स्वधां कृणोमि ) पितृभ्यः पितृयज्ञेन पितृभ्योऽजरां स्थिरां स्वधामुपहारभक्तिं कृणोमि सम्पादयामि ( इमान् दीर्घेणायुषा संसृजामि ) स्वधां दत्वा इमान् पितॄन् दीर्घेणायुषाऽधिकजीवनकालेन संसृजामि संयोजयामि ॥

भावार्थ—( तावेतावहं हविषा व्याकरोमि ब्रह्मणा व्यकल्पयामि ) इन देवयज्ञ और ब्रह्मयज्ञ को मैं आहुतिद्वारा सम्पादन करता हूँ तथा ब्रह्मध्यान या वेदाध्ययनसे अपने जीवनके अन्दर घटाता हूँ। तथा ( पितृभ्योऽजरां स्वधां कृणोमि ) पितृयज्ञसे पितर महानुभावों माता पिता और गुरुजनोंके लिये जीवननिर्वाहक स्थिरोपहार अर्थात् स्थायी आजीविका निश्चित करता हूँ और उस स्थिर आजीविकाद्वारा (इमान् दीर्घेणायुषा संसृजामि) इन पूर्वोक्त पालक महानुभावोंको अधिक जीवन के लिये सब साधनोंसे युक्त करता हूँ ॥

शिक्षा—प्रत्येक मनुष्यका कर्तव्य है कि वह ब्रह्मध्यान और वेदाध्ययनसे ब्रह्म-

यज्ञ तथा अग्निमें होमकर देवयज्ञ और उत्तम अन्नादिसे अपने मातापिता आदि कुटुम्बी जनों और गुरु आदि महानुभावोंकी स्थिर आजीविकाका प्रबन्ध करके पितृयज्ञका सेवन करे ॥

इस मन्त्रमें पितृशब्द माता पिता आदि कुटुम्बीजनों और गुरु आदि महानुभावोंके लिये आया है। उनके लिये स्थिर आजीविकारूप कर्तव्यका विधान है ॥

अग्ने वाजजित् वाजन्त्वा सरिष्यन्तं वाजजितं सम्मार्ज्मि।
नमो देवेभ्यः स्वधा पितृभ्यः सुयमे मे भूयास्तम् ॥

यजु० २ । ७

( अग्ने वाजजिद् वाजजितं त्वा वाजं सरिष्यन्तं सम्मार्ज्मि ) अग्ने हे अग्ने ! वाजजिद् वाजमन्नं जयति सुपाकेन सूक्ष्मीकरणेन वा स सम्बुद्धौ। "वाज इत्यन्ननाम" ( नि० २ । ७ ) वाजजितं त्वां वाजमन्नं सरिष्यन्तं प्राप्नुवन्तं पाकेन हवनेन च परिणमयन्तं सम्मार्ज्मि संशोधयामि समलङ्करोमि संसाधयामित्यर्थः । यत् ( देवेभ्यो नमः पितृभ्यः स्वधा ) वाजश्च देवेभ्योऽग्न्यादिभ्यो विद्वद्भ्यश्च नमः स्वागतं नम्रीभूतं वा सूक्ष्मं भवतु पितृभ्यः स्वधोपहारः सूपाकोऽस्तु ( सुयमे मे भूयास्तम् ) तेऽन्नपरिणामे नमःस्वधारूपे मे मह्यं सुयमे सुधर्मे भूयास्तं भूयास्ताम् ॥

भावार्थ—( अग्ने वाजजिद् वाजजितं त्वा वाजं सरिष्यन्तं सम्मार्ज्मि ) हे अग्ने ! तू अन्नको सुपाकसे सूक्ष्म करने वाली तथा अन्न प्रभावक, अन्न का पाक अथवा होमसे परिणाम करने वाली है अतः मैं तुझको सिद्ध करता हूँ ( देवेभ्यो नमः पितृभ्यः स्वधा ) अग्नि आदि तथा विद्वानोंके लिये वह अन्न स्वागतरूप और कुटुम्बी जनोंके लिये उपहाररूप हो ( सुयमे मे भूयास्तम् ) वे अन्न और परिणाम दोनों नमः और स्वधा लाभदायक हों ॥

शिक्षा—अग्नि अन्नका पाक तथा होम द्वारा परिणाम करती है। वह परिणाम होमरूपमें भौतिक दिव्य पदार्थों और विद्वानोंके सत्कारका निमित्त तथा पाक रूपमें पालक जनों का उपहार बनता है ॥

इस मन्त्रमें पालक जनोंके अर्थमें पितर शब्द आया है। उनके लिये पकान्न का उपहार करने का विधान है ॥

यत्र शूरासस्तन्वो वितन्वते प्रिया शर्म पितृणाम्।
अधास्मा यच्छ तन्वे तने च छर्दिरचित्तं यावय द्वेषः ॥ ऋ० ६।४६।१२

(यत्र शूरासस्तन्वो वितन्वते) यत्र युद्धे शूरासस्तन्वो निजशरीराणि वितन्वते युद्धार्थं सज्जीकुर्वन्ति युद्धवेशेन शोभयन्ति ( पितॄणां प्रिया शर्म ) पितॄणां मुख्यसैनिकानां प्रिया सुन्दराणि शर्म शर्माणि गृहाणि मण्डलानि शिविराणि वितन्वते सज्जीकुर्वन्ति ( अधास्मा तने तन्वे च छर्दिर्यच्छ ) अधानन्तरं तेषां तने तन्यमाने मण्डले मण्डलनिमित्ते 'निमित्तसप्तमी' तन्वे शरीराय च छर्दिर्युद्धक्षेत्रं यच्छ देहि ( द्वेषोऽचित्तं यावय ) द्वेषः शत्रून् प्रत्यचित्तं मूढत्वं यावय प्रापय ॥

भाषार्थ—( यत्र शूरासस्तन्वो वितन्वते ) जिस युद्धमें शूरवीर जन अपने शरीरोंको युद्धार्थ शस्त्रास्त्रादिधारणसे सुशोभित करते हैं ( पितॄणां प्रिया शर्म ) और अपने मुख्य सैनिकोंके मण्डलों छावनियोंको भी यथोचित शस्त्रास्त्रादिसे युद्धार्थ अलङ्कृत करते हैं ( अधास्म तने तन्वे च छर्दिर्यच्छ ) अनन्तर उनके तन्यमान मण्डल और शरीरके लिये युद्धक्षेत्रको दे ( द्वेषोऽचित्तं यावय ) इस प्रकार साधनसम्पत्तिके अनन्तर शत्रुओं के प्रति युद्धमें घबराहटको पैदा कर ॥

शिक्षा—संग्राममें वीर राजा या सेनापति शत्रुओंको घबरा देने और उन पर विजय प्राप्त करनेके लिये अपने सैनिकोंको शस्त्रास्त्रादिसे सुसज्जित करता है और छावनियोंको भी शस्त्रास्त्रादिसे सुसज्जित करता है पुनः युद्ध क्षेत्रके लिये आज्ञा देता है ॥

इस मंत्रमें सैनिक जनोंके लिये पितर शब्द आया है। और उनके लिये सेना मण्डल या छावनी बनानेका आदेश है ॥

**स्वधाकारेण पितृभ्यो यज्ञेन देवताभ्यः ।**
**दानेन राजन्यो वशाया मातुर्हेडं न गच्छति ॥ अथ० १२ । ४ । ३२**

( राजन्यः पितृभ्यः स्वधाकारेण देवताभ्यो यज्ञेन दानेन वशाया मातुर्हेडं न गच्छति ) राजन्यः क्षत्रियो भूपतिः पितृभ्यः सैनिकेभ्यः स्वधाकारेण वेतनोपहारदानेन देवताभ्यो विद्वद्भ्यो यज्ञेन दक्षिणायुक्तेन सम्मेलनेन विद्याप्रचारेण वेत्येवं दानेन वशायाः स्वायत्ताया मातुः पृथिव्या हेडं क्रोधं दौरवस्थिकं दुर्भिक्षादिकं न गच्छति न प्राप्नोति "हेडः क्रोधनाम" ( निरु० २ । १३ ) ॥

भाषार्थ—( राजन्यः पितृभ्यः स्वधाकारेण ) राज्याधिकारी भूपति सैनिकलोगोंके लिये वेतनोपहार देने से ( देवताभ्यो यज्ञेन दानेन ) विद्वानोंके लिये दक्षिणा युक्त यज्ञसे, सम्मेलनसे तथा विद्याप्रचारार्थ दानसे ( वशाया मातुर्हेडं न गच्छति ) स्ववश स्वाधीन पृथिवीके द्वारा दुरवस्थासम्बन्धी दुःख दुर्भिक्ष और दुर्मरणादि राष्ट्रिय उपद्रवको प्राप्त नहीं होता है ॥

